संतप्ते अयसि । समुद्रे या शुक्तिस्तस्या मध्ये पतितम् । अधमश्च मध्यमश्च उत्तमश्च अध०माः तादृशो गुणा यस्य ।

प्रीणाति यः सुचरितैः पितरं स पुत्रो
यद्भर्तुरेव हितमिच्छति तत्कलत्रम् ।
तन्मित्रमापदि सुखे च समक्रियं य-
देतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ ६८ ॥

भर्तुर्हितमेव इत्यन्वयः । समा क्रिया यस्य तत् ।

नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान्गुणान्ख्यापयन्तः
स्वार्थान्संपादयन्तो विततपृथुतरारम्भयत्नाः परार्थे ।
क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान्दुर्मुखान्दूषयन्तः
सन्तः साश्चर्यचर्या जगति बहुमताः कस्य नाभ्यर्चनीयाः ॥ ६९ ॥

परेषां गुणाः तेषां कथनैः । अतिशयेन पृथवः पृथुतरा आरंभाः पृथुतरारम्भाः । महत्कृत्यानीत्यर्थः । तेषु विततः प्रयत्नः यैः ते । आक्षेपाणां यानि रूक्षाणि अक्षराणि तैर्मुखराणि मुखानि येषां तान् । आश्चर्येण सहिता चर्या आचरणं येषां ते ।

lotus-leaf shines assuming the form of pearls; it is transformed into a pearl when it falls into the cavity of a shell in the sea while (the sun is) in conjunction with the constellation *Svātī*. In general, the lowest, the mediocre, and the highest degree of excellence is imparted (to a thing) by association.

68. He is a son who pleases the father with good actions; that is a wife who wishes unmixed good to her husband; that is a friend who acts the same way in adversity as in happy times. The meritorious (alone) secure this triad in this world.

69. Rising by their humility, evidencing their own merits by extolling the merits of others, gaining their ends by projecting extensive schemes for (the good of) others, and

६८ यः प्रणियेत, समक्रियं यद्–यदेकरूपम्.

६९ पृथुतरा–पृथुमहा, बहुतरा. दुर्मुखान् दूषयन्तः–दूषयन्तः समन्तात्.

भवन्ति नम्रास्तरवः फलोद्गमै-
नवाम्बुभिर्भूरिविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥ ७० ॥

फलानामुद्गमे प्रादुर्भावे । नूतनानि अंबूनि तैः ।

श्रोत्रं श्रुतेनैव न कुण्डलेन
दानेन पाणिर्न तु चन्दनेन ।
विभाति कायः करुणापराणां
परोपकारैर्न तु चन्दनेन ॥ ७१ ॥

पापान्निवारयति योजयते हिताय
गुह्यं च गूहति गुणान्प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ ७२ ॥

---

censuring calumniators, whose tongues (lit. mouths) are noisy with the harsh syllables of accusation, with their patience alone—virtuous men of such extraordinary behaviour and highly esteemed in the world—who will not adore them?

70. Trees become bent (*i. e.* humble) with the harvest of fruits; with newly-gathered waters the clouds hang very low; good men with (the acquisition of) wealth become meek; this is the nature of benevolent persons.

71. The ear is graced by Vedic knowledge alone, and not by an ear-ring; the hand by charity, not by a bracelet; the body of beneficent people by kindness towards others, and not by sandal-paint.

72. Wise people thus describe the characteristics of a true friend;—he (*i.e.* a good friend) dissuades (you) from sin urges (you) to good actions, keeps (your) secrets, publishes (your) merits, does not forsake you (when you are) in distress, and helps (you, lit. gives you) in time of need.

---

७० भूरि–भूमि, दूर.

पद्माकरं दिनकरो विकचीकरोति
चन्द्रो विकाशयति कैरवचक्रवालम् ।
नाभ्यर्थितो जलधरोपि जलं ददाति
सन्तः स्वयं परहितेषु कृताभियोगाः ॥ ७३ ॥

अभितः योगः अभियोगः उत्सापूर्वको यत्नः ।

एते सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।
तेमी मानवराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये
ये निघ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ ७४ ॥

परेषामर्थं घटयन्तीति परार्थघटकाः । उद्यमं बिभ्रतीति उद्यमभृतः सोद्योगा इत्यर्थः । विरोधस्य अभावः अवि० स्वार्थेन अविरोधः तेन ।

क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः
क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः ।
गन्तुं पावकमुन्मनस्तदभवद्दृष्ट्वा तु मित्रापदं
युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥७५॥

---

73. The sun causes the group of sun-lotuses to expand; the moon causes the moon-lotuses to bloom; the cloud yields water though unsolicited; good people direct their efforts towards the good of others of their own accord.

74. Those are the noblest persons who giving up the good of self do good to others; those that undertake a business for the sake of others, not inconsistent with their own good are men of the middle order; those that stand in the way of the good of others for their own benefit are demons in a human form; but we know not what to call them ( lit. who they are ) that oppose the good of others for nothing.

75. Milk once gave all ( its ) qualities to its constituent water; on seeing the distress of milk ( *i. e.* when it was

---

७३ जलधरोपि°-°पि जलदः सलिलम्. परहिते सुकृताभियोगाः.

७४ एके, स्वार्थम्-स्वार्थान्. मानव-मानुष.

७५ हि गुणाः इ०-सकला दत्ता निजा ये गुणाः.

आत्मानं गतं प्राप्तं यदुदकं तस्मै ।

इतः स्वपिति केशवः कुलमितस्तदीयद्विषा-
मितश्च शरणार्थिनः शिखरिणां गणाः शेरते ।
इतोपि वडवानलः सह समस्तसंवर्तकै-
रहो विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥ ७६ ॥

तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनम् ।
मान्यान्मानय विद्विषोप्यनुनय प्रच्छादय स्वान्गुणा-
न्कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां लक्षणम् ॥ ७७ ॥

साधोः पदवीम् ।

मनसि वचसि काये पुण्यपीयूषपूर्णा-
स्त्रिभुवनमुपकारश्रेणिभिः पूरयन्तः ।
परगुणपरमाणून्पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ ७८ ॥

heated) water sacrificed itself in the fire ( *i. e.* became evaporated); seeing the distress of its friend (*i. e.* water), it (*viz.* milk) became very eager to throw itself into the fire (lit. to go to the fire, *i. e.* to boil over); and it is settled down when united with that water—such is the friendship of the good.

76. In one part sleeps Kes'ava, in another is the host of his foes, in a third the chain of mountains seeking shelter, in another part yet is Vadava (submarine) fire with all the world-destroying fires. Oh how extensive, deep and enduring is the expanse of the sea.

77. Cut down avarice, have recourse to patience, give up pride, fix not (your) attachment on sinful deeds, speak the truth, follow the footsteps of the good, serve the learned, reverence those that deserve respect, conciliate (your) enemies, do not parade your good qualities, await fame and sympathise with the suffering; this is the way with the good.

78. Very few good men are there who, full of holy nectar

---

७६ विततमूर्जितम्–विभवमूर्च्छितम्.

७७ लक्षणं-चेष्टितम्.      ७८ पूर०-प्रीणयन्तः।

पुण्यमेव पीयूषं तेन पूर्णाः । परेषां गुणाः तेषां परमाणून् ।

किं तेन हेमगिरिणा रजताद्रिणा वा
यत्राश्रिताश्च तरवस्तरवस्त एव ।
मन्यामहे मलयमेव यदाश्रयेण
कङ्कोलनिम्बकुटजा अपि चन्दनानि ॥ ७९ ॥

हेमगिरिः मेरुः । रजताद्रिः कैलासः । कङ्कोलाश्च निम्बाश्च कुटजाश्च ते ।

रत्नैर्महार्हैस्तुतुषुर्न देवा
न भेजिरे भीमविषेण भीतिम् ।
सुधां विना न प्रययुर्विरामं
न निश्चितार्थाद्विरमन्ति धीराः ॥ ८० ॥

भीमं विषं तेन । निश्चितः योऽर्थः तस्मात् ।

कचिद्भूमौ शायी कचिदपि च पर्यङ्कशयनः
कचिच्छाकाहारी कचिदपि च शाल्योदनरुचिः ।
कचित्कन्थाधारी कचिदपि च दिव्याम्बरधरो
मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥ ८१ ॥

---

in thought, word and action, pleasing the three worlds with numerous acts of beneficence, rejoice ( lit. bloom ) at heart in ever magnifying the minute good qualities of others.

79. What is to be done with the mountain of gold or the mountain of silver the trees growing (lit. resting) upon which remain the same as they are; we honour the mountain Malaya alone by resorting to which even the *Kankola*, the *Neem* and the *Kutaja* become sandal trees.

80. With ( the acquisition of ) valuable jewels the gods were not satisfied; and by the dread poison they were not terrified; they did not suspend their labours until they obtained nectar. Resolute persons do not swerve from a policy once determined upon,

81. Sometimes lying on the ground and sometimes on a couch, sometimes subsisting on vegetables and sometimes tast-

---

७९ कुटजान्यपि, ८० महार्घैः,

८१ शायी-शय्या, भूमिः शय्या, शयनः—शयनम्.

निर्व्याजता निष्कपटता ।

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ।
अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता
सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥ ८२ ॥

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ ८३ ॥

नीत्यां निपुणाः । न्यायादनपेतः न्याय्यस्तस्मात् ।

भग्नाशस्य करण्डपीडिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
लोकाः पश्यत दैवमेव हि नृणां वृद्धौ क्षये कारणम् ॥ ८४ ॥

करण्डे पीडिता तनुः यस्य । म्लानानि इंद्रियाणि यस्य ।

---

ing rice prepared from the *S'âli* variety, sometimes wearing a wallet and at others superfine garments, a high-sould man pursuing (his cherished ) object does not care for ease or hardship.

82 Good nature (kind behaviour ) is the ornament of greatness; silence of valour, restraint over the senses of learning, humility of Vedic knowledge, spending for worthy objects of wealth, freedom from anger of austerities;, forgiveness of a man in power, freedom from hypocrisy of religious observances, and good character, which is the root of all is even the ornament of all things.

83. Whether political persons praise or blame, whether wealth enter ( their house ) or go away ( from it ), whether death come even to-day or in another age, persons of mental calibre do not swerve from the path of justice.

84. A mouse, gnawing a hole into a basket, fell at night into the mouth of a serpent that, with its body pent up in a

---

८२ निर्व्याजता-निःकामता.  ८४पीडित-पिण्डित.

पतितोपि कराघातैरुत्पतत्येव कन्दुकः ।
प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तयः ॥ ८५ ॥
आलस्यं हि मनुष्याणां शरीरस्थो महान्रिपुः ।
नास्त्युद्यमसमो बन्धुः कृत्वा यं नावसीदति ॥ ८६ ॥
उद्यमेन समः । अवसीदति नाशमेति ।

छिन्नोपि रोहति तरुः क्षीणोप्युपचीयते पुनश्चन्द्रः ।
इति विमृशन्तः सन्तः संतप्यन्ते न विप्लुता लोके॥८७ ॥
नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः
स्वर्गो दुर्गमनुग्रहः किल हरेरैरावतो वारणः ।
इत्यैश्वर्यबलान्वितोपि बलभिद्भग्नः परैः संगरे
तद्व्यक्तं वरमेव दैवशरणं धिग्धिग्वृथा पौरुषम् ॥ ८८ ॥

basket, and its limbs weakened by starvation, had grown despondent. Filled with its meat the serpent quickly glided away through the same opening (lit. the same passage, *viz.* the hole made by the mouse); see, my men, it is destiny alone that is the cause of the rise and fall of men.

85. A ball, though struck on the ground with a blow from the hand does rebound upwards; generally the misfortunes of the virtuous are evanescent.

86. Sloth is a dreadfull enemy abiding in the body of man: there is no friend like industriousness by resorting to which a man is never ruined.

87. A tree, though cut down, grows again; the moon, though waned, waxes again; thus-reflecting good men are not troubled in this world, when plunged in misery.

88. Indra was worsted in battle by his enemies, though possessed of greatness and prowess—having Bṛhaspati for his adviser, the thunderbolt for his weapon, the gods for his soldiers, the heaven for his citadel and Airâvata for his elephant; it is clear, then, that it is better to submit to fate; oh, fie, valour is useless.

८५ हि सुवृत्तानाम्. ८६ महारिपुः; कृत्वा यं–कुर्वाणः. ८७ चन्द्रः क्षीणोपि वर्धते पुनः, विप्लुता लोके–ते विपद्रा. ८८ किल-खलु, बलभित्–मघवा.

ऐश्वर्यं च बलं च ताभ्यां अन्वितः । अथवा ऐश्वर्यस्य बलं तेन अन्वितः ।

कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी ।
तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥ ८९ ॥

कर्मणः आयत्तं कर्माधीनमित्यर्थः ।

खल्वाटो दिवसेश्वरस्य किरणैः संतापितो मस्तके
वाञ्छन्देशमनातपं विधिवशात्तालस्य मूलं गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥९०॥

शशिदिवाकरयोर्ग्रहपीडनं
गजभुजंगमयोरपि बन्धनम् ।
मतिमतां च विलोक्य दरिद्रतां
विधिरहो बलवानिति मे मतिः ॥ ९१ ॥

शशी च दिवाकरश्च तयोः । ग्रहेण पीडनम् ।

सृजति तावदशेषगुणाकरं पुरुषरत्नमलंकरणं भुवः ।
तदपि तत्क्षणभङ्गि करोति चेदहह कष्टमपण्डितता विधेः ॥९२॥

अशेषा ये गुणाः तेषां आकरम् । पुरुष एव रत्नम् ।

---

89. The fruit which men get depends on action ( done in a former life ), and the inducement to action is in consonance with it ( action done in a previous life ); still a wise man should be doing a thing only after mature consideration.

90. A bald man, pained in the head by the rays of the sun and wishing for a shady place, halted ( lit. went ) under a palm tree; even there, a big fruit falling ( from the tree ) broke his pate with a crash. Verily misfortunes do indeed go there where a luckless man goes.

91. Seeing the trouble caused to the sun and the moon by Râhu, the captivity of the elephant and the snake and the poverty of men of intellect, I come to think—Oh how powerful is destiny.

92. In the first place, fate produces an excellent man, the

---

९० दैवहतकः, तत्रापदां भाजनम्.

पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं
नोलूकोप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम् ।
धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं
यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः ॥९३॥
नमस्यामो देवान्ननु हतविधेस्तेपि वशगा
विधिर्वन्द्यः सोपि प्रतिनियतकर्मैकफलदः ।
फलं कर्मायत्तं किममरगणैः किं च विधिना
नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ ९४ ॥
ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासंकटे ।
रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥९५॥

ornament of the earth and the mine of all good qualities; if it makes the man short-lived, woe to its folly.

93. When on the branch of a *karíra* tree there is not a single leaf, it is not the fault of the spring. If the owl cannot see by day what blame is due to the sun? Showers of rain do not fall into the mouth of the *châtaka*, but why blame the cloud ( for that )? Who is able to wipe off what has once been written on the forehead by Fate?

94. We shall bow to the gods, but then, even they are subject to the accursed fate; ( in that case ) fate ought to receive our homage, but even fate dispenses but the fruits consistent with each action. The fruit being dependent on action, what ( have we to do ) with the gods and what with fate! Bow to *karma* then, which even Fate cannot control.

95. A bow to that Karma by whose power Brahmâ was confined in the interior of the pot-like primordial egg (there to evolve his creation) like a potter; by whose power Vishnu was hurled down into the very troublesome abyss of the ten incarnations; by whose power S'iva has been compelled to wander for alms, skull in hand; and (by whose power) the sun ever roams in the sky.

९४ °यत्तं यदि किममरैः.

ब्रह्माण्डमेव भाण्डं भाजनं तस्योदरे । दशावताररूपं गहनं दुःखं तस्मिन् । कपालेन युक्तः यः पाणिपुटकः हस्तसंपुटकः तस्मिन्या भिक्षा तदर्थं अटनम् । सापेक्षत्वेपि गमकत्वात्समासः ।

नैवाकृतिः फलति नैव कुलं न शीलं
विद्यापि नैव न च यत्नकृतापि सेवा ।
भाग्यानि पूर्वतपसा खलु संचितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ९६ ॥

आकृतिः शरीरसौष्ठवम् । पूर्वमाचरितं यत्तपः तेन ।

वने रणे शत्रुजलाग्निमध्ये
महार्णवे पर्वतमस्तके वा
सुप्तं प्रमत्तं विषमस्थितं वा
रक्षन्ति पुण्यानि पुरा कृतानि ॥ ९७ ॥

शत्रवश्च जलं च अग्निश्च तेषां मध्ये । विषमे निम्नोन्नतभूमौ स्थितम् ।

या साधूंश्च खलान्करोति विदुषो मूर्खान्हितान्द्वेषिणः
प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात् ।
तामाराधय सत्क्रियां भगवतीं भोक्तुं फलं वाञ्छितं
हे साधो व्यसनैर्गुणेषु विपुलेष्वास्थां वृथा मा कृथाः॥९८॥

या खलान् साधून् करोति मूर्खान् विदुषः इत्या० । हालाहलं विषविशेषम् ।

---

96. A handsome form avails not; neither does descent nor character; not even learning, nor service assiduously rendered. Good luck stored by past virtuous actions fructifies for man seasonably as do trees.

97. Good actions done in a former life protect a man in a forest, on a battlefield, in the midst of foes, water and fire, in the vast ocean, or on a mountain-top, whether asleep or careless or beset with any difficulty.

98. O good man, to obtain your cherished desire, adore that goddess—Good conduct—that changes wicked men into good, fools into wise men, enemies into friends, the invisible into the visible and deadly poison into nectar in an instant.

गुणवदगुणवद्वा कुर्वता कार्यमादौ
परिणतिरवधार्या यत्नतः पण्डितेन ।
अतिरभसकृतानां कर्मणामाविपत्ते-
र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ९९ ॥

अतिरभसेन अतित्वरया कृतानाम् । आविपत्तेः मरणपर्यन्तम् ।

स्थाल्यां वैडूर्यमय्यां पचति तिलखलीमिन्धनैश्चन्दनाद्यैः
सौवर्णैर्लाङ्गलाग्रैर्विलिखति वसुधामर्कमूलस्य हेतोः ।
छित्त्वा कर्पूरखण्डान्वृतिमिह कुरुते कोद्रवाणां समन्ता-
त्प्राप्येमां कर्मभूमिं न चरति मनुजो यस्तपो मन्दभाग्यः ॥१००॥

वैडूर्यप्रचुरायां स्थाल्याम् । लाङ्गलाग्रैः हलाग्रैः । कोद्रवाणां कोरदूषकाणाम् । 'हरिक' इति भाषायां प्रसिद्धिः ।

मज्जत्वम्भसि यातु मेरुशिखरं शत्रूञ्जयत्वाहवे
वाणिज्यं कृषिसेवनादि सकला विद्याः कलाः शिक्षताम् ।
आकाशं विपुलं प्रयातु खगवत्कृत्वा प्रयत्नं परं
नाभाव्यं भवतीह भाग्यवशतो भाव्यस्य नाशः कुतः ॥ १०१ ॥

---

Do not set your heart on numerous other qualities with persistent application.

99. A wise man bent on doing a thing good or bad, should first carefully consider the result. The issue of actions done in hot haste becomes, till death, like a dart, poignant to the vitals.

100. The luckless man, that does not practise penance on coming into this Land of *karma*, cooks (*i. e*, is like a man who cooks), with sandal-wood &c. for the fuel, in a utensil made of the *vaidûrya gem*, the oil-cake of sesamum; ploughs (*i. e.* is like a man who ploughs) the earth with a golden ploughshare for the sake of the root of the *arka* tree, and makes (*i. e.* is like a person who makes) a hedge round a crop of *kodrava* of camphor-trees having cut them down.

101. Through the force of destiny a thing that is not to

---

९९ सगुणमपगुणं वा, ०मादौ-जातम्. १०० वैडूर, ०खलीं-तिलकणान्. १०१ शिक्षतु. भाग्य-कर्म०.

भीमं वनं भवति तस्य पुरं प्रधानं
सर्वो जनः सुजनतामुपयाति तस्य ।
कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा
यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥ १०२ ॥

सन्निधि०—सन्त उत्तमा निधयः रत्नानि च तैः पूर्णा ।

को लाभो गुणिसंगमः किमसुखं प्राज्ञेतरैः संगतिः
का हानिः समयच्युतिर्निपुणता का धर्मतत्त्वे रतिः ।
कः शूरो विजितेन्द्रियः प्रियतमा कानुव्रता किं धनं
विद्या किं सुखमप्रवासगमनं राज्यं किमाज्ञाफलम् ॥ १०३ ॥

गुणिपुरुषाणां संगमः । प्राज्ञेभ्य इतरैः मुर्खैरित्यर्थः । समयस्य (यस्मिन्काले यदवश्यं कर्तव्यं तस्य कालस्य ) च्युतिः अतिवाहनम् । विजितानि इंद्रियाणि येन सः । भर्तुः अनुरोधः एव व्रतं यस्याः सा अथवा पत्युः अनु अनुकूलं व्रतमाचरणं कर्म वा यस्याः सा । आज्ञा एव फलं यस्य ।

---

take place, never takes place, nor is a thing fated to take place subverted, though a man may dive into water, ascend to the top of the mountain Meru, conquer enemies in battle, learn trade, agriculture and all other arts and sciences, (or) pass like a bird with great effort through the infinite sky.

102. To a man possessing immense merit (laid by) in a former birth, a dreary forest becomes a capital city, all men act in a friendly way towards him and the whole earth becomes full of precious deposits and gems.

103. What is an advantage gained? The company of the virtuous. What is misery? The company of those that are not-learned. What is a loss? Wasting an opportunity. What is perfection? Being devoted to one's religious principles. Who is a brave man? One that has restrained his senses. What woman is most beloved? One that is devoted. What is wealth? Learning. What is happiness? Not going on a journey. What is kingly power? That which places one in command.

---

१०२ उपयाति सद्यः

मालतीकुसुमस्येव द्वे गती ह मनस्विनः ।
मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥ १०४ ॥

मालत्या जातिलतायाः कुसुमं पुष्पं तस्य इव ।

अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः ।
परपरिवादनिवृत्तैः क्वचित्क्वचिन्मण्डिता वसुधा ॥ १०५ ॥

न प्रियाणि अप्रियाणि तानि च वचनानि तैः दरिद्राः हीनाः तैः । प्रियवचनैः आढ्याः पूर्णाः तैः । स्वदारैः परितुष्टाः तैः । परेषां परिवादः निन्दा तस्याः सकाशात् निवृत्ताः तैः ।

कदर्थितस्यापि हि धैर्यवृत्ते-
र्न शक्यते धैर्यगुणः प्रमार्ष्टुम् ।
अधोमुखस्यापि कृतस्य वह्ने-
र्नाधः शिखा याति कदाचिदेव ॥ १०६ ॥

कदर्थितस्य अतिदुःखितस्य । धैर्येण वृत्तिः यस्य तस्य । धैर्यमेव गुणः । अधः मुखं यस्य तस्य ।

कान्ताकटाक्षविशिखा न खनन्ति यस्य
चित्तं न निर्दहति कोपकृशानुतापः ।
कर्षन्ति भूरिविषयाश्च न लोभपाशै-
र्लोकत्रयं जयति कृत्स्नमिदं स धीरः ॥ १०७ ॥

---

104. High-souled persons have like a *màlatî* flower two fates (in store for them), either to top all men, or to fade away in a forest.

105. The earth is here and there adorned by persons poor in unpalatable speech, rich with pleasing words, content with connubial happiness and desisting from calumniating others.

106. The virtue of courage of a heroic person cannot be subdued though he is worried; though pointed downwards, the flame of fire does not point to the ground.

107. That courageous man conquers the triple world

---

१०४ महात्मनः. १०६ न शक्यते०-बुद्धेर्विनाशो नहि शंकनीयः; कृतस्य वह्नेः-तनूनपातः. १०७ न लुनन्ति.

कान्तायाः कटाक्षाः अपाङ्गवीक्षितानि ते एव विशिखाः । कोप एव कृशानुः अग्निः तस्य तापः । लोभ एव पाशाः बन्धनानि तैः ।

**एकेनापि हि शूरेण पादाक्रान्तं महीतलम् ।**
**क्रियते भास्करेणेव स्फारस्फुरिततेजसा ॥ १०८ ॥**

स्वपादेन आक्रान्तम् । पक्षे पादैः किरणैः । स्फारं विस्तीर्णं स्फुरितं देदीप्यमानं तेजो यस्य तेन ।

**वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणा-**
**न्मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते ।**
**व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते**
**यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥ १०९ ॥**

जलमिव आचरति जलायते । आचारार्थे क्यङ् । एवं सर्वत्र । कुल्या अल्पा कृत्रिमा सरित् । व्यालः सर्पः । अखिललोकानां वल्लभतमम् ।

**लज्जागुणौघजननीं जननीमिव स्वा-**
**मत्यन्तशुद्धहृदयामनुवर्तमानाम् ।**

---

whose mind the arrow-like side-glances of women do not hurt, the heat–of–fire-like anger does not burn and the numerous sensual objects do not draw ( towards them ) with their captivating snares.

108. As by the sun of profusely glittering splendour, so by a warrior, though single-handed, the entire surface of the earth is covered ( overpowered ) with his *pada* ( feet *i. e.* power; rays-in the case of the sun).

109. The fire acts like water, the ocean becomes like a streamlet, Meru like a small stone, the lion like a deer, the serpent like a wreath of flowers, a poisonous juice like a shower of nectar, to him in whose person becomes manifest good character which is prized most by all men.

110. Spirited and truthful persons rather sacrifice their

---

१०८ स्फुरत्स्फारिततेजसा. १०९ कुल्यायते–कूपायते. ११० जननीमिव वर्तमानाम्, अनुवर्तमानाः.

तेजस्विनः सुखमसूनपि संत्यजन्ति
सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥ ११० ॥

लज्जा एव गुणस्तस्यौघः । अथवा लज्जादयो ये गुणास्तेषामोघः । यद्वा लज्जाया ये गुणाः । सत्यमेव व्रतं तदेव तस्मिन्वा व्यसनं येषां ते ।

---

## MISCELLANEOUS.

अग्राह्यं हृदयं यथैव वदनं यद्दर्पणान्तर्गतं[1]
भावः पर्वतसूक्ष्ममार्गविषमः स्त्रीणां न विज्ञायते ।
चित्तं पुष्करपत्रतोयतरलं विद्वद्भिराशंसितं
नारी नाम विषाङ्कुरैरिव लता दोषैः समं वर्धिता ॥ १ ॥

भावः हृद्गत आशयः । पर्वते यः सूक्ष्मः मार्गः तद्वत् विषमं कठिणं दुर्ग्राह्य-मिति यावत् । पुष्करपत्रे यत्तोयं तद्वत्तरलं चञ्चलम् । नामेति प्राकाश्ये ।

अभिमुखनिहतस्य सतस्तिष्ठतु तावज्जयोथवा स्वर्गः ।
उभयबलसाधुवादः श्रवणसुखोसौ बतात्यर्थम् ॥ २ ॥

अभिमुखे निहतस्य । उभयपक्षे यद्बलं तस्य साधु साधु इति वादः ।

---

lives but not their vow which is the source of modesty and other good qualities and which they follow like a mother of pure heart.

---

1. Like unto the face reflected in a mirror the heart of women cannot be comprehended; their feeling intricate like the faint mountain-track cannot be gauged; their heart has been described by the wise as fickle like water on a lotus-leaf; a woman growing with faults is indeed a creeper growing with its poisonous shoots.

2. Leave aside the question whether a man wounded while facing the enemy attains victory or heaven; the applause of both the armies is indeed intensely gratifying to the ear.

---

१ यद्दर्पण--सद्दर्पण ।

इयत्येतस्मिन्वा निरवधिचमत्कृत्यतिशये
वराहो वा राहुः प्रभवति चमत्कारविषयः।
महीमेको मग्नां यदयमवहद्धन्त सलिले
शिरःशेषः शत्रुं निगिलति परः संत्यजति च ॥ ३ ।

निर्गतः अवधिः यस्मात् स निरवधिः स चासौ चमत्कृतेरतिशयश्च तस्मिन्।

उदन्वच्छन्ना भूः स च निधिरपां योजनशतं
सदा पान्थः पूषा गगनपरिमाणं कलयति।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ ४ ॥

उदन्वता उदधिना छन्ना। योजनानां शतम्। स्फुरन् योवधिः स एव मुद्रा तया मुकुलिताः संकुचिताः।

एको देवः केशवो वा शिवो वा
एकं मित्रं भूपतिर्वा यतिर्वा।
एको वासः पत्तने वा वने वा
एका भार्या सुन्दरी वा दरी वा ॥ ५ ॥

कमठकुलाचलदिग्गजफणिपतिविधृतापि चलति वसुधेयम्।
प्रतिपन्नममलमनसां न चलति पुंसां युगान्तेपि ॥ ६ ॥

---

3. As an object of surprise either Varáha or Ràhu surpasses all this collection of infinitely wonderful things, (the former) in that he alone bore up the earth when it was sunk in water; the latter, the head-remnant, in that he swallows the enemy (the sun), and afterwards throws him out.

4. The earth is covered with ocean; the store of waters is a hundred *yojanas* in extent; the sun ever moves along a path which is delimited by the sky; thus in most cases, things are confined within well-defined bounds; but victorious is the intellectual brilliancy of the good being itself unlimited.

5. (Let me have) one god—Keshava or S'iva, one friend, the king or an ascetic, one abode—in the city or in a wilderness and one (thing more)-a charming wife or a cave

कमठश्च कुलाचलाश्च दिग्गजाश्च फणिपतिश्च तैः विधृता । अमलमनसां शुद्धान्तःकरणानाम् ।

किं कूर्मस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्
किंवा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः ।
किंत्वङ्गीकृतमुत्सृजन्स्वमनसा श्लाघ्यो जनो लज्जते
निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥ ७ ॥

क्ष्मां पृथ्वीम् । निर्वाहः संपादनम् । प्रतिपन्नवस्तुषु अङ्गीकृतकार्येषु ।

को न याति वशं लोके मुखे पिण्डेन पूरितः ।
मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥ ८ ॥

क्षुद्राः सन्ति सहस्रशः स्वभरणव्यापारमात्रोद्यताः ।
स्वार्थो यस्य परार्थ एव स पुमानेकः सतामग्रणीः ।
दुःपूरोदरपूरणाय पिबति स्रोतःपतिं वाडवो
जीमूतस्तु निदाघसंभृतजगत्संतापविच्छित्तये ॥ ९ ॥

---

6. This earth, though supported by the tortoise, the (seven) principal mountains, the (eight) principal elephants, and by the serpent-king, does move. The undertaking of persons with a clean breast ( alone ) does not fail even at the time of the final dissolution.

7. Does not the tortoise feel pain in his body on account of his burden, that it does not throw off the earth, or does not the Lord of the day feel fatigue, in that he never remains motionless? ( Yes they do ). But a worthy man, when going to give up his undertaking feels shame inwardly; for carrying to their completion things ( once ) undertaken is the hereditary vow of the good.

8. Who in the world does not become submissive when his mouth is filled with a morsel? The drum gives out a sweet sound when its face is coated ( with dough ).

9. Thousands of mean fellows there are, who are busy

---

७ त्येष यत्–त्येव यः.  कित्व०–किंच, किंवा, न मनसा.

स्वभरणव्यापार एव उद्यताः । दुःखेन पूरणं यस्य तस्य पूरणाय । निदाघेन उष्णोपगमेन संभृतः जनितः जगतः संतापस्तस्य विच्छित्तये निर्वाणाय ।

दूरादर्थं घटयति नवं दूरतश्चापशब्दं
त्यक्त्वा भूयो भवति निरतः सत्सभारञ्जनेषु ।
मन्दं मन्दं रचयति पदं लोकचित्तानुवृत्त्या
कामं मन्त्री कविरिव सदा खेदभारैरमुक्तः ॥ १० ॥

अर्थं द्रव्यजातं पक्षे नवं चमत्कारजनकमर्थं वाक्यसंदर्भम् । चापशब्दं धनुषः टंकारं पक्षे च अपशब्दं व्याकरणशुद्ध्यादिरहितं शब्दम् । पदं तन्त्रव्यवहारं पक्षे सुप्तिङन्तलक्षणम् ।

दैवेन प्रभुणा स्वयं जगति यद्यस्य प्रमाणीकृतं
तत्तस्योपनमेन्मनागपि महान्नैवाश्रयः कारणम् ।
सर्वाशापरिपूरके जलधरे वर्षत्यपि प्रत्यहं
सूक्ष्मा एव पतन्ति चातकमुखे द्वित्राः पयोबिन्दवः॥११॥

---

only in the act of filling themselves. He alone stands at the head of the good, whose self-interest is even doing good to others. The Vâdava fire drinks the sea to fill its insatiable maw; but the cloud to alleviate the heat caused by the summer to the world.

10. Verily a statesman, like a poet, is never free from the burden of anxiety, in as much as he ( statesman ) brings in new wealth from afar, and leaving the sound of bows at a distance again becomes engrossed in pleasing the assembly of the wise and takes his steps slowly and slowly agreeably to the heart of the subjects. ( The second meaning in the poet's case:—he ( the poet ) brings out fresh meaning ( from words which are ) far apart, leaves at a distance unsuitable words, and again becomes engrossed in pleasing the assembly of the wise, and composes verses sweetly according to popular taste ).

11. That which has been fixed as a man's portion in this

---

११ वर्षत्यपः॰

प्रभुणा-प्रभवता । प्रमाणीकृतं निर्माणभागत्वेन दत्तम् । सर्वाश्च ता आशाः तासां परिपूरके ।

परिचरितव्याः सन्तो यद्यपि कथयन्ति न सदुपदेशम् ।
यास्त्वेषां स्वैरकथास्ता एव भवन्ति शास्त्राणि ॥ १२ ॥

प्रायः कन्दुकपातेनोत्पतत्यार्यः पतन्नपि ।
तथा त्वनार्यः पताति मृत्पिण्डपतनं यथा ॥ १३ ॥

यदि नाम दैवगत्या जगदसरोजं कदाचिदपि जातम् ।
अवकरनिकरं विकिरति तत्किं कृकवाकुरिव हंसः ॥ १४ ॥

अवकरनिकरं-धूल्यादिसमूहम् । कृकवाकुः कुक्कुटः ।

यन्नागा मदभिन्नगण्डकरटास्तिष्ठन्ति निद्रालसा
द्वारे हेमविभूषणाश्च तुरगा वल्गन्ति यद्दर्पिताः ।
वीणावेणुमृदङ्गशङ्खपटहैः सुप्तस्तु यद्बोध्यते
तत्सर्वं सुरलोकदेवसदृशं धर्मस्य विस्फूर्जितम् ॥ १५ ॥

करटौ गण्डौ । सुरलोके स्वर्गे ये देवाः तेषां सदृशम् ।

---

world by all-powerful Destiny will go to him; patronage of the great ( lit. great patronage ) is not at all the cause ( of the acquisition ). Although the cloud, the gratifier of the desires of all beings showers daily, only two or three minute drops of water fall into the mouth of the *châtaka*.

12. Good men should be waited upon, though they may not give good advice ( in a special way ). Those that come from them as random discourses serve as scriptures.

13. Though falling, a noble man generally falls like a ball ( *i. e.* to rise again ); but a mean fellow falls like a lump of clay.

14. If ever by chance the world became destitute of lotuses, will the swan then, like a cock, scratch a dunghill ?

15. When at the door elephants whose temples and

---

१२ यद्यप्युपादिशान्ति. १५ मदवारिभिन्नकरटाः. हेम-स्वर्ण, पटहैः-पणवैः.

ये संतोषनिरन्तरप्रमुदितास्तेषां न भिन्ना मुदो
ये त्वन्ये धनलोभसंकुलधियस्तेषां न तृष्णा हता ।
इत्थं कस्य कृते कृतः स विधिना तादृक्पदं संपदां
स्वात्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते ॥ १६ ॥

तेषां मुदः भिन्ना न । ते मेरुनिष्ठसंपन्निरपेक्षा इत्यर्थः । धनलोभेन संकुला व्याप्ता धीर्येषाम् । तेषां तृष्णा न हता न शाम्यति किंतु वर्धते एव । एवं मेरुगता संपन्न कस्मैचिदपि प्रयोजनायेत्यर्थः ।

रक्तत्वं कमलानां सत्पुरुषाणां परोपकारित्वम् ।
असतां च निर्दयत्वं स्वभावसिद्धं त्रिषु त्रितयम् ॥ १७॥

वचो हि सत्यं परमं विभूषणं
गजा(लज्जा)ङ्गनायाः कृशता कटौ च ।
द्विजस्य विद्यैव पुनस्तथा क्षमा
शीलं हि सर्वस्य नरस्य भूषणम् ॥ १८ ॥

---

cheeks are covered with ( lit. separated by the line of ) rut, stand lazy through drowsiness, the steeds with their gold-mounted caparisons neigh proudly, when one is waked from sleep by the sound of lutes, clarionets, drums, conches, and tabors;—all that like ( the accompaniments ) of the lord of heaven is the manifestation of the power of virtue.

16. The joys of those who always rejoice in contentment have not been interrupted,! nor is the thirst of those others quenched, that have their minds agitated by covetousness for wealth. This being the case for whose sake was that Meru created by Brahman?–Meru, the peerless repository of wealth, the glory of whose gold is for itself alone. I like not it.

17. Redness in lotuses, beneficence in good men, and ruthlessness in the wicked—these three are by nature established respectively in the three.

18. True speech is the highest ornament; for a woman with the stately gait of an elephant slenderness of the

---

१६ सन्तोषसुखप्रमोदमु०, लोभ–लुब्ध.

वरं तुङ्गाच्छृङ्गाद्गुरुशिखरिणः क्वापि विषमे
पतित्वायं कायः कठिनदृषदन्तर्विदलितः ।
वरं न्यस्तो हस्तः फणिपतिमुखे तीव्रदशने
वरं वह्नौ पातस्तदपि न कृतः शीलविलयः ॥ १९ ॥

विषमे शिलादिसंकटे । कठिनाश्च ता दृषदस्तासामन्तर्विदलितः शीर्णः वरं । शीलभ्रंशो न वरम् ।

विरम विरसायासादस्माद्दुरध्यवसायतो
विपदि महतां धैर्यध्वंसं यदीक्षितुमीहसे ।
अपि जडमते कल्पापाये व्यपेतनिजक्रमाः
कुलशिखरिणः क्षुद्रा नैते न वा जलराशयः ॥ २० ॥

विरसात्फलाभावेनासुभगः आयासः यस्मिन् । दुरध्यवसायतः दुर्व्यापारात् । व्यपेतनिजक्रमाः त्यक्तनिजकार्यपरिपाटय एते महान्त कुलशिखरिवत् जलराशिवद्वा निजं महिमानं न जहत्येवेत्यर्थः ।

---

middle is the (highest ornament); for the twice-born, learning and in addition patience (are the highest ornaments). Good character is an ornament for all mankind.

19. It would be better if this body falls from the lofty peak of a high mountain against a rugged surface and is shattered to pieces in the midst of rough rocks; better is the hand thrust into the fangs of a huge serpent of deadly bite, better falling into the fire; but not the wrecking of one's character.

20. Cease from this wicked pursuit all trouble in which must be fruitless —*viz.* your desire to see the courage of magnanimous persons give way in times of difficulty; oh

---

१९ विषमे-पुलिने.

२० विरम विरस, अयि-अपि, जडमते-जडविधे.

**स्पृहयति भुजयोरन्तरमायतकरवालकररुहाविदीर्णम् ।**
**विजयश्रीर्वीराणां व्युत्पन्नप्रौढवनितेव ॥ २१ ॥**

आयतः यः करवालः खड्गः कररुह इव तेन विदीर्णम् । पक्षे आयतकर-सम्बधिनो ये बालकररुहाः कोमलनखाः यद्वा करवाल इव कररुहास्तैर्विदीर्णम् । व्युत्पन्ना शृङ्गारविषये लब्धप्राविण्या प्रौढा प्रगल्भा च । वनिता सुन्दरस्त्री ।

**अयममृतनिधानं नायकोऽप्योषधीनां**
**शतभिषगनुयातः शम्भुमूर्धावतंसः ।**
**विरहयति न चैनं राजयक्ष्मा शशाङ्कं**
**हतविधिपरिपाकः केन वा लङ्घनीयः ॥ २२ ॥**

शतभिषक् शततारकानक्षत्रपुञ्जः । पक्षे शतं भिषजो वैद्याः । हतविधेः दैवहतकस्य ।

---

silly creature, these are not the principal mountains the usual actions of which have ceased on account of the world coming to an end, nor are they the oceans:—both insignificant ( on that account).

21. Like an accomplished and grown up handsome woman, the Splendour of Victory likes the chest of warriors lacerated with the nail-like long sword ( in the case of the woman-sword-like nails or the tender nails of her husband).

22. Though he is the repository of nectar, and the lord of herbs, though he is followed by a hundred physicians, and is the crest-ornament of S'iva's head, consumption does not leave the Moon; or by whom can the ordinance of cruel Fate be transgressed?

शुभ्रं सद्म सविभ्रमा युवतयः श्वेतातपत्रोज्ज्वला
लक्ष्मीरित्यनुभूयते चिरमनुस्यूते शुभे कर्मणि ।
विच्छिन्ने नितरामनङ्गकलहक्रीडात्रुटत्तन्तुकं
मुक्ताजालमिव प्रयाति झटिति भ्रश्यद्दिशोऽदृश्यताम् ॥२३॥

सविभ्रमाः सविलासाः । श्वेतातपत्रेणोज्ज्वला भासुरा रमणीयेत्यर्थः । अनुस्यूते दृढानुबन्धे । अनङ्गकलहेषु प्रणयकलहेषु त्रुटन्तः तन्तवः यस्य तत् मुक्ताजालं मौक्तिकहारः ।

---

23. When good luck is favourable to one ( lit. closely linked ), a splendid mansion, sportive women, and prosperity brilliant with the white umbrella—all these things are experienced for a long time; but when unfavourable ( lit. when its thread is snapped ) all these vanish in all directions and become invisible like a wreath of pearls the thread of which is snapped in the sport of amorous quarrel.

# NOTES.

Sl. 1. The poet begins with a salutation to Brahma, the *Supreme Ens*, which is one of the three modes prescribed for the opening of a poem by Sanskrt writers on Poetics, *viz.* आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्*—A blessing (to be conferred on the readers), a salutation ( to the favourite Deity), and an indication of the subject matter are the three prescribed forms of introduction for a poem. The Vedântic character of the sl. the student will easily note. दिक्काल—space and time; अवच्छिन्न is lit. what is cut off from all sides, is contained in another, is measured; अनवच्छिन्न means what is unmeasured; hence undefined, unconditioned. आदि refers to qualities (*gunas*) such as धर्म, अधर्म *&c.*, as well as to कार्यs (effects) &c. न विद्यते अन्तः यस्य तदनन्तं infinite. चिन्मात्रमूर्ति—चिन्मात्र pure intelligence or knowledge. A Karm. of the मयूरव्यंसकादि class. ०मूर्तिः whose form is pure intelligence. दिक्का०-ये—A *Tripada* Karm. This is the best way of taking the Com.. The attributes of Brahma here expressed are summed up in the *Mahâva'kya* 'सत्यं ज्ञानमनन्तं ब्रह्म' of the Taittirîya Upanishad. Another way is to analyse the Comp. as a Bah. with मूर्ति as the second member with all that precedes as its attributive member, itself being a Comp. of three adjectives. मूर्ति is derived from मूर्च्छ् 1. P. to settle into a solid form+क्तिन्, and literally means what is visible to the senses; hence secondarily what is perceptible to the mind. The Da. sing. of neu. adj. ending in इ is optionally formed like that of mas. nouns; so—मूर्तये or-र्तिने. See Gr. §69. Pan. VII. I. 74.

स्वानुभूति &.—स्वानुभूति-self-perception, manifestation of Brahma in contemplation. एक means 'principal, chief' rather than 'sole'; *cf.* the couplet एकोऽल्पार्थे प्रधाने च &c. quoted in Gr. § 154; also Amara 'एके मुख्यान्यकेवलाः । मान—मीयतेऽनेनेति मानम् from मा+ल्युट् ( अन ), a measure; hence the means of correct knowledge. In

* Dandi. Kâvya'dars'a. 1,

this sense the word प्रमाण is more common. Brahma is specially regarded as प्रत्यक्षप्रमाणगम्य capable of being realised by perception, although there are other means of knowing it such as आगम &c. Another reading here is स्वानुभूत्येकसाराय which Mr. Telang interprets in two ways:-(1) to him who is the sole essence of self-knowledge or (2) to him whose sole (or principal) essence is self-knowledge, preferring the former, as that, he thinks, gives the अद्वैत view of the Veda'nta.

शान्ताय &c.—The dat. by नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च' Pan. II. 3. 16. शान्त is one of the attributes of Brahma; *cf.* the S'ruti निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' तेजसे-refers to Brahma and not to the third element. Brahma is often called परं ज्योतिः in the Upanishads. Comp. एष संप्रसाद......परं ज्योतिरुपसम्पद्य &c. Chha'ndogya; also the S'ruti तद्देवा ज्योतिषां ज्योतिः (उपासते).

"For the idea may be compared Gregory Nyssen's description of the divine nature quoted by the late Mr. Mansel in his Philosophy of the Conditioned (p. 16):—It is neither in place nor in time, but before these and above these in an unspeakable manner, contemplated itself by itself, through faith alone, neither measured by ages, nor moving along with times." Mr. Telang.

For the idea comp. Panchadas'i.—देशकालान्यवस्तूनां कल्पितत्वाच्च मायया। न देशादिकृतोऽन्तोऽस्ति ब्रह्मानन्त्यं स्फुटं तथा ॥

Sl. 2. The present S'loka is said by the commentators (whose remarks are perhaps based on a tradition which is almost universal) to refer to a family intrigue the incidental discovery of which filled Bhartṛhari with disgust for worldly life. It is this:—Once upon a time, a Brāhmaṇa, who had come by a fruit* which conferred immortality on any one who ate it, gave it to Bhartṛhari, as the worthiest person to receive it, being the protector of many people. Bhartṛhari gave it to his wife, who gave it to her paramour, who in his turn gave it to a sweet-heart of his who again presented it to Bhartṛhari. The sloka, however,

* According to another version king Vicrama obtained the fruit from a Yogin, he gave it to a Brāhmana, he to Bhartṛhari and so on.

is quite out of place here as it has no connection with any thing that follows. If it is the supposed expression of the abhorrence for the intrigues and sins of the world felt by some one disgusted with it, then the most natural place for it would be the *Vairagyas'ataka.* Many manuscripts, however, agree in giving it here.

चिन्तयामि—think with affectionate regard or love. मयि विरक्ता- Words implying love, attachment ( or disattachment ) &c. govern the loc. of the person or thing for whom or which the feeling is shown. Mr. Telang considers the loc. to be वैषयिक being equi- valent to मद्विषयकानुरागवती. अन्यसक्तः—अन्यस्यां सक्तः attached or devoted to. अन्या becomes अन्य *i. e.* assumes पुंवद्भाव by the Va'rt. सर्वनाम्नः वृत्तिमात्रे ( in Sama'sa and the other Vṛttis )पुंवद्भावः' see Malli. on अनन्यभाजं पतिमाप्नुहीति &c. Kum. III. 63.

कृते—For, for the sake of ( Indec. ); is often compounded as here. *Cf* काव्यं यशसेऽर्थकृते &c. Kav. P. I. When not compounded it governs the gen; अमीषां प्राणानां कृते Vair. S'a. 36. परिशुष्यति— pines for, feels ardent love for. This reading is evidently prefer- able (as Mr. Telang also thinks) to परितुष्यति which may be best rendered as "delighted with all I do."

धिक्—is used with the acc.. मदन—from मद् (माद्यत्यनेन)+अन. Lit. the intoxicating god. च इमाम्—The hiatus here is allowed by the rule–संहितैकपदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षते ॥ Sid. Kau.—*Sandhi* is absolutely necessary in a grammatical form, in the case of a preposition and a root, as also in compounds; but in composition it depends on the will of the writer. Rhetoricians, however, consider it a fault called 'विसं- धिदोष.' See Kav. P. VII.

Sl. 3. अज्ञ.—जानातीति ज्ञः (ज्ञा+क); न ज्ञः अज्ञः। सुखं, सुखतरम्- used as adverbs, विशेषं जानातीति विशेषज्ञः । ज्ञानलव॰-लव *m.* is de- rived from लू to cut, to divide; a particle. दुर्विदग्ध-विदग्ध properly means what is well burnt, polished and burnished; hence refined with culture, learned; दुष्टं यथा तथा विदग्धः दुर्विदग्ध, badly learned or wise, vain, arrogant ( with little learning; ज्ञानलवेन दुर्विदग्धः). दुर्विदग्धः दुश्चतुरः, अर्धज्वलित इत्यर्थः । Ramarshi. *Cf.* 'Little know-

ledge is a dangerous thing.' ब्रह्म-derived fr. बृह् 1. 6. P. to grow +मनिन्, the ऋ being changed to र before it by Un. IV. 145. रंजयति—रंज् cau. means to colour, to impart one's hue to; hence to win over, to gratify or propitiate. The cau. form is रजयति when the meaning is to sport with or hunt deer; see Kir. VI. 24. Some read the line as ब्रह्मापि तं नरं &c. but this violates the laws of metre (as it makes 17 *ma'tra's* in the Pàda instead of 15 or 18) and is therefore inadmissible.

Sl. 4. प्रसह्य—Indec., with great force. मणि–from. मण् to sound +इ (न्). मकर०-मं विषं किरतीति (कृ+अच्) a crocodile, a shark. वक्त्र—वक्त्यनेनेति from वच्+ष्ट्रन् करणे. दंष्ट्रा-also der. with ष्ट्रन् from दंश् to bite. ०अंकुर V. 1.—from अंक् to mark, stamp.+उरच्, means pointed, sharp. दंष्ट्रांकुरात्–from the tips or points (*i. e.* when held fast between the points) of the jaws; sing. for the pl. *Cf.* दर्भांकुर S'a., and दीपांकुर Vair. S'a. 68. प्रचलदू०—ऊर्मीणां मालाः ऊर्मिमालाः, प्रचलन्त्यश्च ता ऊर्मिमालास्ताभिराकुलस्तं ruffled or agitated with a series of rolling billows. ऊर्मि *m. f.* from ऋ+मि, अर्तेरूच Un. IV. 44.

भुजंग—भुजः (bent, curved कुटिलीभवन्) सन् गच्छतीति; भुज+गम्+खच्; मुम् (the nasal) inserted by 'अरुर्द्विषदजन्तस्य मुम्' Pân. VI. 3. 67.—Before the aff. खच् and खश् the words अरुस्, द्विषत्, and such as end in अ take the aug. म् when used prepositionally with verbs. पुष्पवत्-पुष्पेण तुल्यम् like a flower. तेन तुल्यं क्रिया चेद्वतिः Pân. V. I. 15. वत् is attached to a noun in the sense of तेन तुल्यं 'equally with that' when the equality refers to an act. प्रतिनिविष्ट—obstinate in holding contrary opinions, perverse. *Cf.* निविशते Vair. S'a. Mis. sl. 19.

Sl. 5. सिकतासु—The word सिकता is always used in the plural. तैलं-तिलस्य तत्सदृशस्य वा विकारः। अण् विकारार्थे। यत्नतः-यत् +नङ् (भावे); तस् here stands for the instr. मृगतृष्णिका-मृगाणां तृष्णाऽस्यां मृगतृष्णा। सा एव मृगतृष्णिका by adding क स्वार्थे; mirage. सिकता-सुतैलं excellent oil &c., मृगतृष्णिका-सुसलिलं sweet water—may also be regarded as compound words. This way of taking the

expressions is perhaps better as it adds to the force of the argument, and avoids प्रक्रमभङ्ग. It, however, does not look natural. सलिल—सलति गच्छतीति, सल् + इलच् . *Cf.* the *subhâshita* एष वन्ध्यासुतो याति खपुष्पकृतशेखरः । मृगतृष्णाम्भसि स्नातः शशशृङ्गधनुर्धरः ॥ wherein all the things generally spoken of as absolute impossibilities are brought together.

Sl. 6. व्याल—A wild elephant. 'व्यालो दुष्टगजे सर्पे' इति हैमः । Some take it to mean 'a serpent' but without propriety, as it considerably impairs the force of the argument; *cf.* sl. 17. रोद्धुम्—To tie down. For the inf. see Apte's G. § 176 and note. बालमृणाल°—बालः चासौ मृणालः (also *n.*). तन्तु is from तन् + तुन्. समुज्जृम्भते—has a metaphorical meaning here; strives, makes efforts. वज्रमणिः—a diamond (वज्रं चासौ मणिः). प्रान्तः–प्रकृष्टोन्तः extreme edge. शिरीष is known to be the softest flower. This shows the extreme folly of the act. संनह्यते—prepares one's self for. It properly means to put on armour and thus to equip one's self for battle; *cf.* Mah. Bhà. युद्धाय संनह्यते. It is Atm. in this sense. पथि—The root नी governs two objects and the acc. would have been more idiomatic. But as पथि is not the principal object but only secondary it depends upon the will of the speaker to put it in the acc. or its natural case. माधुर्य–मधुरस्य भावः । मधु. मधु रातीति मधुरम् । सुधास्यन्दिभिः—सुधां स्यन्दन्ते तच्छीलैः: shedding nectar, mellifluous. The root is sometimes used transitively. *Cf.* हालाहलं खलु पिपासति कौतुकेन कालानलं परिचुचुम्बिषति प्रकामम् । व्यालाधिपञ्च यतते परिरब्धुमद्धा यो दुर्जनं वशयितुं कुरुते मनीषाम् । Bhá. Vil. I 93; also 96. where the idea is somewhat differently expressed.

The rhetorical fig. here is *Nidars'ana'* (मालानिद°) which is defined as–निदर्शना । 'अभवन्वस्तुसम्बन्ध उपमापरिकल्पकः ॥ when an impossible connection of things implies a comparison it is निदर्शना. निदर्शनं दृष्टान्तकरणम् (citing of an instanee), We have here a *Ma'la'nidarsa'na'* (a string of illustrations) as the *upama'nas* or 'things compared to' are many.

Sl, 7. स्वायत्तम्-स्वस्य आयत्तम् at one's command, within

of diseases. ( यक्ष्मणां रोगाणां राजा ). *Cf.* राजयक्ष्मेव रोगाणां समूहः स महीभृताम् S'is. II. 96; commenting on which Malli. quotes from Va'gbhatta—अनेकरोगानुगतो बहुमानपुरःसरः। राजयक्ष्मा क्षयः शोषो रोगराडिति च स्मृतः॥ नक्षत्राणां द्विजानां च राज्ञोऽभूद्यदयं पुरा। यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः॥ The moon was cursed to be eternally consumptive by his father-in-law, Daksh, for paying sole attention to Rohini and neglecting his other daughters. At the intercession of his wives the sentencc of eternal consumption was commuted to one of periodical consumption.

Sl. 28. विभ्रम—amorous sport; it is also one of the *ha'vas* of love or S'ṛngára. श्वेतातपत्रोज्ज्वलाः—*i. e.* universal sovereignty, an emperor only has the privilege of using a white umbrella. *Cf.* अनुदितान्यसितातपवारणः Rag. IX. 15. अनुस्यूत—interwoven *i. e.* continuous. विच्छिन्ने—when the continuity is broken. अनङ्ग—अनङ्गकलह ( in love-quarrels ) क्रीडासु ( and sports ) त्रुटन्तः तन्तवो यस्य तत्. The propriety of the words अनङ्ग॰ is not clear. Probably the idea is that pearls dropped down at such a time are not noticed; so Lakshmî Vanishes imperceptibly. दिशोऽदृश्यताम्—Lit. the state of being visible only at the end of quarters *i. e* not within the reach of eyesight. The words may also be taken separately दिशोऽदृश्यताम्; दिशः अदृश्यदृश्यतां प्रयाति Running in all directions disappears. Mr. Telang proposes the reading दृशोऽदृश्यताम् while Mr. Joglekar suggests the construction अदृश्यत् दिशः प्रयाति ; दृश्यताम्.

॥ श्रीगणेशाय नमः ॥

# । अथ वैराग्यशतकम् ।

दिक्कालाद्यनवच्छिन्नानन्तचिन्मात्रमूर्तये ।
स्वानुभूत्येकमानाय नमः शान्ताय तेजसे ॥ १ ॥

व्याख्यातमेतत्पद्यम् ।

बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः ।
अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् ॥ २ ॥

बोद्धारः सदसद्व्यक्तिहेतवो ज्ञानिनः । मत्सरेण अन्यशुभद्वेषेण ग्रस्ता व्याप्ताः । प्रभवः राजानो धनाढ्या वा स्मयेन गर्वेण दूषिताः । अन्ये प्राकृता जना अज्ञानेनोपहताः सदसतोरन्तरं ज्ञातुमसमर्था इत्यर्थः । अतः सुभाषितमङ्गे जीर्णं गुणग्रहीत्रभावादित्यर्थः । पादत्रयस्य चतुर्थपादं प्रति हेतुत्वात्काव्यलिङ्गमलंकारः ।

---

1. See stanza 1, Nîti-S'ataka.

2. Wise men ( who can appreciate good speech ) are overpowered by jealousy; rich men are blinded by arrogance; and by ignorance are smitten the rest of the people. (Hence) good speech is absorbed in the body ( of the poet, and finds no vent for want of encouragement ).

---

१ अस्य स्थाने इत्येतत्पद्यं पठ्यते कैश्चित्—
चूडोत्तंसितचारुचन्द्रकलिका चञ्चच्छिखाभास्वरो
लीलादग्धविलोलकामशलभः श्रेयोदशाग्रे स्फुरन् ।
अन्तःस्फूर्जदपारमोहतिमिरप्राग्भारमुच्चाटयन्
चेतःसद्मनि योगिनां विजयते ज्ञानप्रदीपो हरः ॥ इति.

२ अबोधो-अज्ञानो. अङ्गेषु भाषितम्.

न संसारोत्पन्नं चरितमनुपश्यामि कुशलं
विपाकः पुण्यानां जनयति भयं मे विमृशतः ।
महद्भिः पुण्यौघैश्चिरपरिगृहीता हि विषया
महान्तो जायन्ते व्यसनमिव दातुं विषयिणाम् ॥ ३ ॥

संसारोत्पन्नं चरितं जीवयात्रायामुत्पन्नान् भावान् । अनुपश्यामि विचार्य सुखपरिणामं न पश्यामि। विमृशतः परमार्थतः सुखोदर्का वा नेति विचारयतः। तत्र हेतुमाह महद्भिः इति। चिरपरिगृहीताः चिरं सेव्यत्वेनाङ्गीकृताः । महान्तः स्फीताः अधिकाधिकसुखदत्वात् । अयं भावः। 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इति स्मृतेरेते विषया आपाततः सुखोदर्का इव विषयिणां न तु विवेकिनां भासमाना अन्ते तान् संसृतावेव पातयन्ति । इदमेव भयकारणम् ।

उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो
निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन संतोषिताः ।
मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः
प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम् ॥ ४ ॥

निधेः निक्षेपस्य शंकया लभ्येतेत्याशया । ध्माताः औषधादीनां योगेन संस्कृताः । मन्त्राराधने मन्त्रदेवताप्रीत्या तत्साधने तत्परेण । काणवराटकः कपर्दिकशकलम् ।

---

3. I do not expect life in this world to turn out happy; the result of meritorious deeds inspires me with fear as I contemplate it; and enjoyments long experienced in return for accumulated stores of merit assume mighty proportions to make the enjoyer miserable, as it were.

4. I dug up the earth expecting to find a treasure; smelted ores found in mountains; crossed the lord of rivers; assiduously propitiated kings; passed several nights in the cemetery solely intent upon obtaining incantations; ( but after all ) I have not obtained even a brcken cowrie. Leave me now, thou Greed.

---

४ निशाः=क्षपाः, संप्राप्तश्च वराटकोऽपि.

भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किंचित्फलं
त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला ।
भुक्तं मानविवर्जितं परगृहेष्वाशङ्कया काकव-
त्तृष्णे जृम्भसि पापकर्मनिरते नाद्यापि संतुष्यसि ॥ ५ ॥

देशं भ्रान्तं देशे भ्रमणं कृतम् । 'गत्यर्था—' इति भावे क्तः । उचितं योग्यम् । आशंकया निष्कासनभयेन । हे पापकर्मणि निरते सक्ते पापचरणाय प्रवर्तयित्रि इत्यर्थः । न संतुष्यसि । अतःपरं कस्यामापदि पातयितुमिच्छसीति भावः ।

खलोल्लापाः सोढाः कथमपि तदाराधनपरै-
र्निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा ।
कृतश्चित्तस्तम्भः प्रतिहतधियामञ्जलिरपि
त्वमाशे मोघाशे किमपरमतो नर्तयसि माम् ॥ ६ ॥

खलानां उल्लापाः दुर्भाषितानि । तेषामाराधने सेवने पराः प्रसक्तास्तैरेवंभूतैरस्माभिरिति शेषः । कथमपि महासङ्कटेन सोढा मर्षिताः । नैतदेव केवलं किंतु अन्तर्बाष्पं निरुद्ध्य शून्येन हास्यजनकभावशून्येन मनसा ते हसन्तीति हासितमपि । तेषां खलानां हसितमपि कार्याकार्यविचारशून्येन मनसा सोढमिति केषांचिद्व्याख्यानं न सहृदयानां प्रीतिकरम् । चित्तस्तंभोन्तर्गतभावगुप्तिः । अन्तवर्ती कोपि विकारो न प्रकटीकृत इत्यर्थः । तथा प्रतिहता धीर्येषां तेषां जडधियामित्यर्थः । प्रहसितेतिपाठे प्रहसिते परिहासेधीर्बुद्धिर्येषां तेषामञ्जलिर्नमस्कारोपि कृतः । मोघा निष्फला आशा यस्याः सा । हे आशे इत्थं कृतपूर्वान्नर्तनात्किमपरमन्यत् यतो हेतोः मां नर्तयसि नृत्यकृत्ये योजयसि ।

5. I wandered over the country impassable on account of numerous difficulties, but did not obtain any thing; giving up the proper pride for race and lineage I served (but) to no purpose; banishing all sense of self-respect, I dined in strange houses, fearing like a crow (of being driven away at any moment); but thou waxest still, oh Greed—delighting in wicked deeds—and art not satisfied.

6. Intent upon propitiating them, I endured with great

५ भ्रान्त्वा, जाति-शील, जृम्भसि—दुर्मति, वैरिणि. ६ प्रतिहत—प्रहसित.

आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं
व्यापारैर्बहुकार्यभारगुरुभिः कालो न विज्ञायते ।
दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते ।
पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतं जगत् ॥ ७ ॥

गतागतैरस्तोदयरूपैः । अहरहः प्रत्यहं । जीवितमायुः । संक्षीयते क्षीणं क्षीणं भवति । बहवः कार्यभाराः । कार्यातिशया इति यावत् । तैर्गुरुभिर्व्यापारैः कियत्परिमाणः कालो गत इति न विशेषेण ज्ञायते । जन्म च जरा च विपत्तिश्च मरणं च दृष्ट्वा त्रासो जन्मादिजं भयं नोत्पद्यते । क्लेशपूर्णोऽयं जन्मादिकलापः । तत्र सुखलवाभावेऽपि सुखप्राचुर्यं प्रतीयते मूढैः । अत एव ते तद्धत्वविद्याकामकर्मसु विरतिं न कुर्वन्तीति भावः । एवं जगत् मोहमयीं मोहप्रचुरां प्रमाद एव मदिरा तां पीत्वा प्राश्य उन्मत्तभूतं कर्तव्याकर्तव्यविविचारशून्यं जातमिति भावः ।

दीना दीनमुखैः सदैव शिशुकैराकृष्टजीर्णाम्बरा
क्रोशद्भिः क्षुधितैर्नरैर्न विधुरा दृश्येत चेद्गेहिनी ।
याच्ञाभङ्गभयेन गद्गदगलत्त्रुट्यद्विलीनाक्षरं
को देहीति वदेत्स्वदग्धजठरस्यार्थे मनस्वी जनः ॥ ८ ॥

दीनानि मुखानि येषां तैः क्षुधितैः क्षुत्पीडितैः अत एव क्रोशद्भिराक्रोशं कुर्वाणैः शिशुकैः बालकैः। अनुकम्पायां कन् । आकृष्टं जीर्णमम्बरं वस्त्रं यस्याः

difficulty the taunting words of wicked men; checking in my tears, I even laughed with a vacant heart; I calmed down my heart, and even bowed to the wicked. Disappointed Greed, in what other way wilt thou make me dance?

7. With the setting and rising of the sun life becomes shorter and shorter day by day; the lapse of time is not felt in business which weighs down a man with the great weight of work; the feeling of disgust is not awakened on beholding the aggregate of birth, old age, misery and death; the world has been maddened by drinking the intoxicating wine of delusion.

8. If a man did not see his wife distressed and wearing

७ विपत्ति–वियोग. ८ नरैर्न–निरन्न; गद्गदगलद्त्रुच्छाद्व; जनः-पुमान्.

सा। विधुरा अन्नाद्यभावाद्विकला गेहिनी भार्या न दृश्येत चेत्। याच्ञाया: भङ्ग: तस्य भयेन स्वदग्धजठरार्थे स्वस्य यद्दग्धं तुच्छं जठरं तस्यार्थे को मनस्वी जन: गद्गद: य: गल: तत्र त्रुट्यन्ति विलीनानि च अक्षराणि यथा स्यु: तथा 'देहि' इति वदेत्। न कोपीत्यर्थ:। 'अभ्यर्थनाभङ्गभयेन भीरुर्माध्यस्थमिष्टेप्यवलम्बतेर्थे' इति न्यायात्।

निवृत्ता भोगेच्छा पुरुषबहुमानो विगलित:
समाना: स्वर्याता: सपदि सुहृदो जीवितसमा:।
शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने
अहो धृष्ट: कायस्तदपि मरणापायचकित:॥ ९॥

भोगेच्छा विषयभोगेच्छा निवृत्ता। असामर्थ्यात्। पुरुषबहुमान: अहमिदं करिष्यामि एवंप्रभावोहमिति पुरुषत्वाभिमान:। भावप्रधानो निर्देश:। सुहृद: सखाय:। प्रत्युपकारनिरपेक्ष उपकारकर्ता सुहृदिति भाष्यकृदादिभि: पूज्यैर्व्याख्यातोयं शब्दोऽन्यत्र। जीवितेन समा:। समाना: स्वसमानवयस: सपदि तत्कालं स्वर्याता: स्वर्गं गता:। परलोकवासिन: संवृत्ता:। शनै: मंदं मंदं यष्ट्युत्थानं सहायभूतया यष्ट्या उत्थानं। घनं सान्द्रं यत्तिमिरं रोगविशेष: तेन रुद्धे। पञ्चम्या अपक्षयलक्षणया भावविक्रियया आपादितत्वात्। तदपि ईदृशीं कष्टावस्थां प्राप्तोऽपि काय: मरणरूपापायाच्चकितो भीतो भवति कष्टतरावस्थया क्लिश्यमानोपि न देहसंबन्धि ममत्वाभिमानं त्यजतीति भाव:। अतिकष्टास्वप्यवस्थासु जीवितनिरपेक्षा न भवन्ति खलु प्राणिनां प्रवृत्तय इत्यनुरूपो भाव: कादम्बर्याम्।

---

a care-worn appearance, with hungry and noisy children ever tugging at her threadbare raiment with piteous looks, what man, who respects himself, would, for the sake of his accursed stomach say—" Give me "—the syllables being broken and absorbed in the gurgling throat for fear of the supplication being rejected.

9. The desire for enjoyments is dead; the pride of youth is humbled: co-eval friends valued as life itself have sped ... to heaven; ( I have ) to stand up slowly supporte...

---

१ बहुमानोपि ग०; समा:-तमा:, यष्ट्यु-य...

हिंसाशून्यमयत्नलभ्यमशनं धात्रा मरुत्कल्पितं
व्यालानां पशवस्तृणाङ्कुरभुजः सृष्टाः स्थलीशायिनः
संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां
यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥१०॥

हिंसया शून्यं रहितम् । अयत्नलभ्यं अनासायेन प्राप्यम् । व्यालानां सर्पाणामशनं खाद्यं धात्रा विधिना मरुद्रूपं कृतम् । तेनैव स्थल्यामकृत्रिमभूमौ शेरते तच्छीलाः पशवः तृणानामङ्कुरान् भुञ्जते इति तृणाङ्कुरभुजः सृष्टाः । संसार एवार्णवस्तस्य लंघने क्षमा योग्या धीर्बुद्धिर्येषां तेषां नृणां सा वृत्तिः जीविका कृता यां सततमन्वेषयतां ईप्सूनां सर्वे गुणाः विद्वत्ववैचक्षण्यादयः समाप्तिं प्रयान्ति ।

न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये
स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः ।
रामापीनपयोधरोरुयुगुलं स्वप्नेऽपि नालिङ्गितं
मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥ ११ ॥

विधिवत् शास्त्रोक्तरीत्या संसारविच्छित्तयेऽपुनर्भवायेश्वरस्य जगन्नियामकस्य पदं न ध्यातमेकाग्रमनसा चिन्तितम् । अनेन मुमुक्षाभावः सूचित । तथा स्वर्गद्वारकपा-

---

the eyes are obstructed by pitch darkness, still the body fears injury from death; how wonderfully shameless it is!

10. The creator ordained the air to serve the serpents as food—not involving the sin of killing life, and accessible without any effort; animals living on land he made to eat grass; ( but ) to men, whose talents are capable of bearing them over the ocean of life, he has assigned such a living that while in pursuit of it all their good qualities are invariably brought to an end ( exhausted ).

11. For the purpose of severing all worldly connections we did not, according to the prescribed rules, contemplate the feet of the Lord, nor did we accumulate religious merit which is capable of bursting open the doors of heaven; nor did we embrace, even in a dream, the pair of stout ( full-grown) breasts and thighs of a beautiful woman. We (have

---

१० धात्रा०-वायुः कृतो वेधसा. सततं-सहसा. ११ रामा-नारी०

टस्य पाटने उद्घाटने पटुः कुशलः समर्थो वा धर्मो। धर्मानुष्ठानजन्यं पुण्यमिति यावत्। नोपार्जितः। एतेन स्वस्य आमुष्मिकसुखानर्हत्वं दर्शितम्। रामाया वरस्त्रियाः पीनौ यौ पयोधरौ तयोरूर्वोश्च युगुलं युग्मं स्वप्नेऽपि नालिङ्गितम्। एतेनैहिकसुखाभावो निदर्शितः। किंतु केवलं मातुर्जन्मदात्र्याः यौवनवनच्छेदनविषये वयं कुठाराः च्छेदनहेतवः संवृत्ताः।

भोगा न भुक्ता वयमेव भुक्ता-
स्तपो न तप्तं वयमेव तप्ताः।
कालो न यातो वयमेव याता-
स्तृष्णा न जीर्णा वयमेव जीर्णाः॥ १२॥

वयमेव भुक्ताः सर्वभक्षकेण कालराक्षसेन इति शेषः। तप्ताः दुःसहसंसारदुःखैः। याता अकृतकार्या अन्तिमामवस्थामित्यर्थः। एतेन स्वजन्मवैफल्यं द्योतितम्। विषमोलंकारः।

क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न संतोषतः
सोढो दुःसहशीतवाततपनक्लेशो न तप्तं तपः।
ध्यातं वित्तमहर्निशं नियमितप्राणैर्न शम्भोः पदं
तत्तत्कर्म कृतं यदेव मुनिभिस्तैस्तैः फलैर्वञ्चिताः॥ १३॥

परदत्तदुःखादि क्षमया हेतुभूतया न सोढं किंतु भयहेतुना। गृहोचितं सुखं संतोषतः हेतोः न त्यक्तं किंतु परतंत्रत्वादनिच्छया। दुःसहशीतादिक्लेशः

---

been serviceable ) simply as axes in cutting down the forest in the form of our mother's prime of life.

12. We have not enjoyed pleasures, but we have been preyed upon (by the destructive influence of time); we have not undergone austerities, but we have been harassed ( by worldly cases ): time has not lapsed, but the lease of our life; our greed has not decayed but we have.

13. We forbore but not through forgiveness; we relinquished domestic happiness—but not willingly; we endured the pain caused by inclement cold, wind and sun—but did

---

१३ सोढाः °तपनाः क्लेशात्. वञ्चिताः–वञ्चितम्, रञ्चितम्.

सोढः किंतु तपो न तप्तम् । नियमितप्राणैः निरुद्धप्राणवृत्त्या अहर्निशं सततं वित्तं ध्यातं न शंभोः पदम् । एवं च यद्यदेव मुनिभिः । ईश्वरमननान्मुनिः । तैः क्षान्तिसुखत्यागादि कर्म कृतं तत्तदस्माभिरपि कृतम् । किंतु तत्तत्कर्मफलेन वयं वञ्चिताः । मुनिभिः प्राप्यमाणं फलं न लब्धमिति भावः । विशेषोलंकार ।

**वलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः ।**
**गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ १४ ॥**

आक्रान्तं व्याप्तम् । पलितैः शुभ्रकेशैः अंकितं चिह्नितम् । गात्राणि इन्द्रियगोलकानि शिथिली भवन्ति । किंतु एका तृष्णा तरुणायते । देहेन्द्रियादिसामर्थ्यनाशेऽपि तृष्णाविरामः कदाचिदपि न भवतीति मथितार्थः ।

**येनैवाम्बरखण्डेन संवीतो निशि चन्द्रमाः ।**
**तेनैव च दिवा भानुरहो दौर्गत्यमेतयोः ॥ १५ ॥**

येनैव अंबरखंडेन वस्त्रैकदेशेन । पक्षे नभोभागेन । संवीतः आच्छादितः तनैव दिवसे भानुः सूर्यो वेष्टितः । अहो इत्याश्चर्ये । एतयोस्तेजस्विनोर्दौर्गत्यं दैन्यं दुर्गतस्य भावः । समर्थयोरपि दैन्यं अस्मिन्हतसंसारे दृश्यते चेत् का कथा अस्मादृशानां मर्त्यानामसमर्थानां चेति भावः ।

---

not (thereby) practise austerities; day and night did we think of wealth—but not, with restrained vital airs, of the feet of S'iva. We did the various actions which ascetics perform; but as to the several fruits (obtained by them) we have been deceived

14. Wrinkles have made an inroad on the face; with gray hair the head is marked out; all the limbs become feeble; greed alone keeps its youthful vigour.

15. What a wretchedness is it, that the same strip of *ambara* (sky, cloth) covers the sun by day with which the moon is covered at night?

---

१५ अहो-पश्य.

अवश्यं यातारश्चिरतरमुषित्वापि विषया
वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ।
व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः
स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥ १६ ॥

विषयाः शब्दादयः । चिरतरं बहुकालमुषित्वापि स्थित्वाप्यवश्यं निश्चयेन यातारः गन्तारः । ते हि क्षणभङ्गुराः खलु । इति निश्चिते सति तेषां मनःपूर्वकत्यागे स्वयं गमने वा को भेदः । न कोऽपीति आक्षेपपूरणम् । यद्यतः हेतोः जनः स्वयममून्न त्यजति । वियोगे स्वरूपतो भेदाभावेपि फलतो भेदं दर्शयति । एते स्वातन्त्र्याद् व्रजन्तः गच्छन्तः मनसोऽतुलपरितापाय भवन्ति । स्वयं त्यक्तास्तु तेषां बुद्धिपूर्वकहाने अनन्तं निःसीमं शमसुखं समाधानलक्षणं विदधति कुर्वन्ति । विषयाणां स्वतः वियोगो दु खहेतुस्तेषामनर्थकरत्वालोचनेन बुद्ध्या हानं तु निरतिशयानन्ददायि तस्मात्पुरुषेण अवश्यं तेषां हानं कर्तव्यमिति भावः ।

विवेकव्याकोशे विकसति शमे शाम्यति तृषा-
परिष्वङ्गे तुङ्गे प्रसरतितरां सा परिणतिः ।
जराजीर्णैश्वर्यग्रसनगहनाक्षेपकृपणः
कृपापात्रं यस्यां भवति मरुतामप्यधिपतिः ॥ १७ ॥

विवेकस्य व्याकोशः उन्मीलनं यस्मिंस्तस्मिन् । शमो नाम श्रवणादिव्यतिरिक्तविषयेभ्यो मनसो निग्रहः । इत्युक्तलक्षणे शमे । व्यधिकरणोऽयं बहुव्रीहिः । यद्वा विवेकेन व्याकोशः स्फुटः । विकसति सति । तुङ्गे उच्छ्रिते अतिदृढे इति

16. Even after remaining with one for a long time pleasures must vanish. What more is there in pleasures tearing themselves away from one, that one does not of his own accord relinquish them? When vanishing of their own accord, pleasures end in keen anguish for the mind; but when relinquished by one of one's own will, they produce eternal happiness on account of tranquillity.

17. When self-restraint developed by discrimination becomes manifest, and when the strong hold desire has upon

१६ ह्येते–त्वेते. १७ शमे–शनैः गहना–महता, कृपा-तृषा.

यावत्। तृषाया: परिष्वङ्गे आश्लेषे शाम्यति सति सा परिणति: सुखातिशयरूपा प्रसरतितरामतिशयेन विस्तृता भवति । जरया जीर्णं यदैश्वर्यं तस्य प्रसनेनोपभोगेन कृतो गहनो य आक्षेपः चित्तव्याकुलता निन्दा वा तेन कृपणो दीनः मरुतां पतिरिन्द्रोऽपि यस्यां परिणतौ कृपापात्रमनुकम्पास्पदं भवति । तृषापात्रमिति पाठे एतस्मिन्सुखे सतृष्णो भवति । सान्तस्य स्वर्गसुखस्य तुच्छत्वादिति भावः ।

**कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलो**
**व्रणी पूतिक्लिन्नः कृमिकुलशतैरावृततनुः ।**
**क्षुधाक्षामो जीर्णः पिठरककपालार्पितगलः**
**शुनीमन्वेति श्वा हतमपि च हन्त्येव मदनः ।। १८ ।।**

कृशः अस्थिपञ्जरावशेषः । काण एकचक्षुः । पुच्छरहितः । व्रणी सव्रणः । पूत्या क्लिन्नः । खञ्जो विकलपादः । कृमिकुलशतैरावृता तनुर्यस्य । क्षुत्पीडितः । अत एव जीर्णः क्षीणशक्तिः । पिठरकस्य कपाले अर्पितः गलः येन । एवं भूतः श्वा शुनीमन्वेति विषयाभिलाषेणानुगच्छति । मदनः हतप्रायमपि हन्त्येव । अहो कष्टम् ।

---

man is relaxed, there appears that perfection ( the last stage of contemplation ) wherein even the lord of gods, becomes an object of pity, wretched ( as he is under the influence of desire ) on account of the strong distraction of enjoying greatness worn out through age.

18. A dog, lean, blind and lame, crop-eared and tail-less (through disease), covered with abscesses clammed with pus, and with its body covered with hundreds of worms, exhausted through starvation, decayed with age, and having the brim of an earthen jar placed round its neck, follows a bitch. *Madana* scruples not to smite even one that has already been smitten.

---

१८ पूति-पूय; पिठरज;०कणालेपित, ०लार्दित.

भिक्षाशनं तदपि नीरसमेकवारं
शय्या च भूः परिजनो निजदेहमात्रम् ।
वस्त्रं सुजीर्णशतखण्डमयी च कन्था
हा हा तथापि विषयान्न जहाति चेतः ॥ १९ ॥

भिक्षासनं भैक्ष्यभोजनं । तदपि नीरसं रसवर्जितमेकवारं च । परिजनः सेवकवर्गः स्वदेहमात्रं न तु तद्व्यतिरिक्तः कश्चिद्भार्यापुत्रादिः । सुतरां जीर्णानि शतं खण्डानि तत्प्रचुरा कन्था च वस्त्रम् । हाहेति खेददर्शको निपातः । तथापि एवं वैराग्यहेतौ निकृष्टावस्थायामपि पुरुषं विषिण्वन्ति पुरुषपशुं बध्नन्तीति विषयास्तान् । मोक्षेर्धानं क्रियत इत्यर्थः ।

स्तनौ मांसग्रन्थी कनककलशावित्युपमितौ
मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितम् ।
स्रवन्मूत्रक्लिन्नं करिवरशिरःस्पर्धि जघन-
महो निन्द्यं रूपं कविजनविशेषैर्गुरु कृतम् ॥ २० ॥

स्तनौ अन्नपरिणामस्य मांसस्य ग्रंथी तथापि कनकघटोपमानेन वर्णितौ । मुखं श्लेष्मागारं श्लेष्मणः स्थानम् । किंतु तदपि शशाङ्केन चंद्रेण सह तुलितम् । स्रवन्मूत्रेण क्लिन्नमार्द्रमपि जघनं स्त्रीकटीपुरोभागः तत्करिश्रेष्ठस्य शिरःस्पर्धि । ताच्छील्ये णिनिः । इति वर्णितम् । अहो निन्द्यं निन्दायोग्यं रूपं स्त्रीलावण्यं कविजनविशेषैः कैश्चित् कामिजनरंजनतत्परैः कविभिर्गुरु कृतम् महत्त्वमारोपितमित्यर्थः ।

---

19. Alas! the mind does not give up ( its longing ) for carnal pleasures even when one has to eat food obtained by begging, and that too unsubstantial and once (only in a day), ( when he has ) the earth for his couch, and only his self for his attendants, and when his raiment is a wallet of a hundred threadbare rags ( stitched together ).

20. The breasts which are fleshy protuberances are compared to golden jars; the mouth which is the receptacle of phlegm is likened to the moon; the hips * * * (are des-

---

१९ सुजी० च जी०; जीर्णशत-शीर्णपट, विषया विषयान्–न परित्यजन्ति.
२० शिरः-कर; अहे-मुहुः, कविवर.

अजानन्माहात्म्यं पततु शलभो दीपदहने
स मीनोप्यज्ञानाद्बडिशयुतमश्नातु पिशितम् ।
विजानन्तोप्येते वयमिह विपज्जालजटिला-
न्न मुञ्चामः कामानहह गहनो मोहमहिमा ॥ २१ ॥

शलभः कीटविशेषः । माहात्म्यं दाहशक्तिमजानन्दीपस्य दहने ज्वालायां पततु नाम । मीनोऽपि अज्ञानात् बडिशयुतं मत्स्यवेधनेन युतं सम्बद्धं पिशितं मांसमश्नातु कामं भक्षयतु । परंतु वयं इह संसारे विशेषेण जानन्तः सदसद्विवेकवन्तोऽपि विपज्जालजटिलान् आपत्समुहग्रस्तान् कामान् न मुञ्चामः । अहहेति खेदे । मोहस्य महिमा गहनो दुर्विज्ञेयः खलु ।

फलमलमशनाय स्वादु पानाय तोयं
शयनमवनिपृष्ठं वल्कले वाससी च ।
नवधनमधुपानभ्रान्तसर्वेन्द्रियाणा-
मविनयमनुमन्तुं नोत्सहे दुर्जनानाम् ॥ २२ ॥

फलमशनाय शरीरधारणप्रयोजकभोजनार्थमलं पर्याप्तम् । पानाय तृषाशान्त्यर्थं स्वादु निर्झरनिस्यान्दि तोयं जलम् । अलमिति उत्तरत्राप्यनुकर्षणीयम् । अवनिपृष्ठं भूतलं शयनं वल्कले च वाससी व्यावहारिकलज्जास्थानाच्छादने । नवं च तद्धनं च तदेव मधु मद्यं तस्य प्राशनेन भ्रान्तानि सर्वेन्द्रियाणि येषां तेषां दुर्जनानामविनयमौद्धत्यमनुमंतुं नोत्सहे ।

---

cribed as ) rivalling the trunk of an elephant-king. Mark how the despicable form ( of a woman ) has been heightened by a certain class of poets.

21. Let a moth fall upon the flame of a lamp not knowing its power; let the fish through ignorance bite the baited flesh; but even we that know better do not give up sensual objects complicated by a net of difficulties. Alas! how mysterious is the influence of infatuation.

22. Fruits for a meal, sweet water for drink, the ( bare ) surface of the earth for a bed, and barks for raimnent, are ( all ) good ( preferable ) enough; but I cannot tolerate ( lit.

---

२१ मा०–दाहात्म्यम्, दाहार्तिम्; दीप–तीव्र. २२ फल-बिस, शयनम्–क्षितिरपि शयनार्थम्;०ष्ठं–ष्ठे; नवधन-निधुवन, धनलव; अनुमन्तुम्-उपगन्तुम्.

विपुलहृदयैर्धन्यैः कैश्चिज्जगज्जनितं पुरा
विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा
इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते
कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥ २३ ॥

विपुलं उदारं हृदयं अंतःकरणं येषां तैः कैश्चित् धन्यपुरुषैः प्रजापतिभिः पुरा सृष्ट्युत्पत्तिकाले जगज्जनितमुत्पादितम् । अपरैर्विष्ण्वादिपालयितृभिः विधृतं पालितम् । अन्यैः परशुरामादिभिर्विजित्य तृणं यथा तृणमिव द्विजादिभ्यो दत्तम् । अन्ये बलिसदृशाः धीराः । इह हि अस्मिन्नेव लोके । तथापि कतिपयानां परिच्छिन्नसंख्याकानां पुराणां स्वाम्ये स्वामित्वे क एष मदज्वरः दर्पः । तेषामयं महान् दर्पोऽप्रयोजक इत्यर्थः ।

त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः
ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः ।
इत्थं मानद नातिदूरमुभयोरप्यावयोरन्तरं
यद्यस्मासु पराङ्मुखोसि वयमप्येकान्ततो निस्पृहाः ॥ २४ ॥

उपासितः सेवितो यो गुरुस्तस्माल्लब्धा या प्रज्ञा कार्याकार्यविवेकविषया तस्या अभिमानेनोन्नताः वयम् । त्वं विभवैः ऐश्वर्यैः ख्यातः । नः यशांसि कवयः काव्यकाराः दिक्षु दशसु प्रतन्वान्ति प्रकर्षेण विस्तारं प्राप्नुवन्ति । एवं प्रकारेण

---

sanction ) the impudence of wicked men, all whose senses have been maddened by the fresh ( acquisition of ) wealth as if by drinking wine.

23. The world was formerly created by certain large-hearted blessed persons; by some it was sustained, and by others it was conquered and given away as if it were grass; other noble persons even now rule the fourteen worlds. What morbid infatuation is it then that men become subject to when they have acquired rulership over a few towns?

24. You are a king, we too are raised aloft by our pride for the wisdom acquired from the preceptor whom we served; you are known for your greatness, (even) our fame the poets

---

२३ हृदयैः-मतिभिः; धीराः-वीराः.

हे मानद शत्रूणां मानं याति खण्डयतीति तत्संबुद्धिः। आवयोरुभयोरप्यतरं भेदः नातिदूरं अतिशयेन न विद्यते। यदि त्वमस्मासु पराङ्मुख आदरवर्जितस्तर्हि वयमपि एकान्ततः निस्पृहाः। अत्यन्तनिस्पृहत्वान्नादरापेक्षा अस्माकम्।

अभुक्तायां यस्यां क्षणमपि न यातं नृपशतै-
र्भुवस्तस्या लाभे क इव बहुमानः क्षितिभुजाम्।
तदंशस्याप्यंशे तदवयवलेशेऽपि पतयो
विषादे कर्तव्ये विदधति जडाः प्रत्युत मुदम्॥ २५॥

यस्यां क्षणं क्षणपरिमाणं कालमपि अभुक्तायां सत्यां नृपाणां शतैः न यातं किंतु असंख्या नृपतयः यां भुक्त्वैव गताः। तस्याः अंशस्यापि अंशे तथा तस्यांशस्याप्यवयवलेशे वयं पतयः इति जडा अविवेकिनः विषादे कर्तव्ये अन्योपभुक्तस्य तत्रापि तुच्छस्य तस्य गर्ह्यत्वात्। प्रत्युत विपर्ययेण मुदं विदधति कुर्वते।

मृत्पिण्डो जलरेखया वलयितः सर्वोऽप्ययं नन्वणुः
स्वांशीकृत्य स एव संयुगशतै राज्ञां गणैर्भुज्यते।
नो दद्युर्ददतेऽथवा किमपि ते क्षुद्रा दरिद्रा भृशं
धिग्धिक्तान्पुरुषाधमान्धनकणं वाञ्छन्ति तेभ्योऽपि ये॥२६॥

सर्वोऽप्ययं मृत्पिण्डो पृथ्व्याख्यः जलरेखया समुद्रेण वलयितः ननु अणुर्लघुः परिच्छिन्नः। तथापि स एव राज्ञां गणैः समूहैः संयुगशतैः हिंसाप्रचुरयुद्धशतैः

---

spread in all directions; thus, oh dignifier ( or mortifier of men) the difference between us is not very great; if you turn away your face from us, we too are utterly indifferent ( towards you ).

25. What honour is it to kings to obtain ( the rulership of ) the earth, which was not left unenjoyed even for a moment by hundreds of kings; but the lords of a part of its ( earth's ) part, and of even a small part of that part—fools that they are— rejoice when on the contrary they ought to grieve ! !

26. The clod of earth is encircled by the watery edge. Even when taken as a whole, it is indeed very small; as it

---

२५ क्षितिभृताम्. २६ वलयितः–परिवृतः; स्वांशीकृत्य–अङ्गीकृत्य, भागीकृत्य तमेव...गणा भुञ्जते; नो दद्युः०–तद्दद्युर्ददतेऽथवा न किमपि क्षुद्रा.

स्वांशीकृत्य स्वत्वापादनेन भुज्यते । ते पृथ्व्येकदेशप्राप्त्यर्थमनेकप्राणिघातकाः राजानः किमपि नो दद्युः पूर्वमधुना वा न किंचिद्ददते । यद्वा नो दद्युः किंचिदत्यल्पं ददते वा । अत एव क्षुद्रा नीचा दरिद्राश्च सन्ति । तथापि तेभ्योपि ये धनकणान् । बहुदातृत्वाभावात् । वाञ्छन्ति तान्पुरुषाधमान् धिक् धिक् । तुच्छताद्योतिका वीप्सा ।

न नटा न विटा न गायना न परद्रोहनिबद्धबुद्धयः ।
नृपसद्मनि नाम के वयं कुचभारानमिता न योषितः ॥२७॥

परेषां द्रोहः परद्रोहः तस्मिन्निबद्धा बुद्धिर्यैस्ते । नृपस्य सद्म तस्मिन् वयं के नाम । गायनाः गायकाः । ण्युट् च इति साधुः । यतः कुचभारेण नमिताः योषितोऽपि न । नटत्वादिविशेषगुणविशिष्टत्वाभावादस्मादृशानां राजद्वारि प्रवेशोपि दुर्लभः ।

पुरा विद्वत्तासीदुपशमवतां क्लेशहतये
गता कालेनासौ विषयसुखसिद्ध्यै विषयिणाम् ।
इदानीं तु प्रेक्ष्य क्षितितलभुजः शास्त्रविमुखा-
नहो कष्टं सापि प्रतिदिनमधोधः प्रविशति ॥ २८ ॥

पुरा प्राचीनकाले विद्वत्ता उपशमवतां शांतिपराणां क्लेशहतये दुःखक्षयार्थमासीत् । कालेन दीर्घकालेनासौ विषयिपुरुषाणां विषयसुखसिद्ध्यै वैषयिकसुख-

---

is it is apportioned by a number of kings and enjoyed after hundreds of battles. Abject and exceedingly poor, they, therefore, give or would give nothing. Fie upon those mean fellows who wish to get even from them a single coin.

27. Of what value, indeed, are we in a royal palace since we are neither actors, nor flatterers, nor singers; nor have our heart set on hating others; nor are we handsome women bent down with the burden of the breasts ?

28. Learning formerly served to remove the pain ( of existence ) of those who possessed self-restraint. In course

---

२७ गायकाः; न पर०–न च सत्येतरपक्षपातिनः, सभ्येतरवादिचञ्चवः, तथ्येतरवादतत्पराः; सद्मनि–संसदि.

२८ उपश०–अमलिनधियाम्; क्षितितल०–लव.

प्राप्त्यर्थं गता । इदानीं तु क्षितितलभुजः भूभुजः शास्त्रविमुखान् शास्त्रपराङ्मुखान्प्रेक्ष्य सापि विद्वत्ता प्रतिदिनमधोधो गच्छति । एवं समुचिताश्रयाभावादधिकाधिकं नीचावस्थापन्ना भवतीत्यहो कष्टम् ।

स जातः कोप्यासीन्मदनरिपुणा मूर्ध्नि धवलं
कपालं यस्योच्चैर्विनिहितमलंकारविधये ।
नृभिः प्राणत्राणप्रवणमतिभिः कैश्चिदधुना
नमद्भिः कः पुंसामयमतुलदर्पज्वरभरः ॥ २९ ॥

कोप्यनिर्वचनीयमहिमा । मदनरिपुणा शंकरेण । कपालं शिरोस्थि । अलंकारविधये अलंकारविधानार्थम् । तस्य सफलं जन्म इतिभावः । प्राणत्राणे जीवितरक्षणे प्रवणा नम्रा पटुर्वा बुद्धिर्येषां तैः नमद्भिः कैश्चित्पुरुषैः हेतुना कोऽयं पुंसां गर्वः । अत्यन्तमयोग्य इत्यर्थः ।

अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदर्थं
शूरस्त्वं वादिदर्पज्वरशमनविधावक्षयं पाटवं नः ।
सेवन्ते त्वां धनाढ्या मतिमलहतये मामपि श्रोतुकामा
मय्यप्यास्था न चेत्तत्त्वयि मम सुतरामेष राजन्गतोस्मि ॥ ३० ॥

हे राजन् त्वं द्रव्यस्येश्वरोसि वयमपि च गिरामीश्वराः स्मः । यावदर्थं यावानर्थस्तावत् । वादिनां दर्पः गर्व एव ज्वरस्तस्य शमनविधौ नः अस्माकं अक्षयं

---

of time it be gan to secure sensual happiness for sensualists. Seeing that the rulers of the earth are now averse to learning, alas! it is even going down and down.

29. He (lit. that unnamable person) alone was born whose white skull was, by the enemy of the God of Love, held aloft on his head as an ornament; (and yet) what height of morbid presumption is there in men when a few persons solicitous of saving their own lives bow to them.

30. You are the lord of riches in full, we too of words in all their senses; you are brave, our skill in the act of subduing

---

२९ सजातः-सुजातः; प्रणव-प्रबल. ३० यावदित्थम्; वादि-वाग्मि; धनाढ्या-मदान्धा, धनान्धा; मतिमल०-ध्यातिविमलधियः; न चेतसा त्वयि. अस्मात्परं-यदा किंचिदज्ञोहम् इत्येतत्पद्यं क्वचित्.

पाटवं नित्यपटुता । धनेन धनार्थं वा अन्धा धनान्धाः धनप्राप्त्या धनप्राप्त्यर्थं वा कार्याकार्यविचारनिरपेक्षाः । मतेः मलः तस्य हतये क्षयार्थम् । श्रोतुकामाः श्रवणेच्छावन्तः मय्यास्था न चेतसा त्वय्यपि मम सुतरां नास्त्येव गतोऽस्मि इदानीम् । यतः निःस्पृहत्वात्तृणीकृतसर्वसारः ।

अतिक्रान्तः कालो लटभललनाभोगसुभगो
भ्रमन्तः श्रान्ताः स्मः सुचिरमिह संसारसरणौ ।
इदानीं स्वःसिन्धोस्तटभुवि समाक्रन्दनगिरः
सुतारैः फूत्कारैः शिव शिव शिवेति प्रतनुमः ॥ ३१ ॥

लटभा मनोज्ञा या ललनाः स्त्रियस्तासां भोगेन उपभोगेन सुभगो रमणीयः। इह अस्यां, अथवा अस्मिन्मर्त्यलोके, संसारः एव सरणिः मार्गः तस्यां सुचिरं दीर्घकालं भ्रमन्तः श्रान्ताः श्रमपूर्णाः स्मः । इदानीं स्वःसिन्धोः स्वर्धुन्याः गंगायाः तटसंबंधि या भूस्तस्यां सुतारैः दीर्घैः फूत्कारैः फूत् इति शब्दः । खेददर्शकोऽयं ध्वनिः । सह शिव शिव शिव इति समाक्रन्दनस्य गिरः प्रतनुमः प्रकर्षेण तनुमः ।

माने म्लायति खण्डिते च वसुनि व्यर्थे प्रयातेऽर्थिनि
क्षीणे बन्धुजने गते परिजने नष्टे शनैर्यौवने ।
युक्तं केवलमेतदेव सुधियां यज्जह्नुकन्यापयः-
पूतग्रावगिरीन्द्रकन्दरदरीकुञ्जे निवासः क्वचित् ॥ ३२ ॥

माने जातिकुलाद्यभिमाने म्लायति गलिते सति । खण्डिते नष्टे सति ।

---

the feverish pride of a controversialist is inexhaustible; those who are filled with wealth serve you, even me serve those that have a longing to listen to me that the taint of their hearts may be removed; if you have no respect for me, the less have I for you; oh king, here I am off.

31. The time ( that was ) happy on account of the enjoyment of lovely women is passed, and having for long wandered along this avenue of the world we are exhausted; now ( remaining ) on the bank of the Ganges ( lit. the river of heaven ) we send forth ( lit. extend ) with deep sighs our cries ( of invocation ) with the words—S'iva, S'iva, S'iva.

32. Pride being on the decline, fortune being dissipated,

---

३१ लटभ–ललित. ३२ म्लायिनि, वसुनि–वयसि. दरी–तटी.

अर्थिनि अर्थोऽस्यातीति तस्मिन् याचके व्यर्थे विगतः अर्थः यथास्यात्तथा । कामनवाप्येत्यर्थः । प्रयाते प्रकर्षेण गते सति । यौवने यूनः भावः तस्मिन् । सुधियां बुद्धिमतां । जह्नोः कन्या गंगा तस्याः पयसा पूताः पुनीताः ग्रावाणः यस्मिन्नेवंविधस्य गिरीन्द्रस्य हिमवतः कन्दरस्य तटी तस्यां यः कुञ्जस्तस्मिन् । क्वचित् यत्र कुत्रापि युक्तं योग्यम् । एवंविधायां कष्टावस्थायां सर्वसंगपरित्यागः कर्तव्यः इति तात्पर्यम् ।

**परेषां चेतांसि प्रतिदिवसमाराध्य बहु हा**
**प्रसादं किं नेतुं विशसि हृदय क्लेशकलिलम् ।**
**प्रसन्ने त्वय्यन्तःस्वयमुदितचिन्तामणिगुणे**
**विमुक्तः संकल्पः किमभिलषितं पुष्यति न ते ॥ ३३ ॥**

हे हृदय । परेषां धनिनाम् । प्रत्यहं बहु अधिकप्रमाणेन आराध्य संसेव्य । हेति खेदे । प्रसादं संतोषं नेतुं संपादितुं क्लेशकलिलं क्लेशदुःखं किं विशसि । स्वयं स्वतंत्रतया उदिता उद्गताः चिंतामणेः गुणाः यस्मिंस्तस्मिन् । त्वयि अन्तःप्रसन्ने अभिलषितं वाञ्छितं न पुष्यति संपादयति । सर्वमपि पुष्येदित्यर्थः । तस्मात् पुरुषेण प्रयत्नतः परप्रसादनकरणं विहाय स्वान्तःकरणप्रसादनार्थं प्रयतितव्यमितिभावः ।

---

the mendicant having gone without wealth ( charity ), the relations having diminished in number, attendants having gone away, and youth having gradually died out, only one thing ( lit. only this ) is proper for the wise *viz.* a habitation somewhere in a brake in a cavern of the mountain, the rocks of which have been purified by the waters of the Ganges.

33. Alack-a-day! ( my ) heart why dost thou enter the dense mass of misery (suffer much distress) in order to please the hearts of others by daily propitiation? When with the powers of the *Chintámaṇi* spontaneously rising in thee, thou art inwardly satisfied, what object of thine foregone-desire will not satisfy?

---

३३ बहुधा; कलिलं-कलितम्, क्लेशमफलम्.

**भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं**
**माने दैन्यभयं बले रिपुभयं रूपे जराया भयम् ।**
**शास्त्रे वादभयं गुणे खलभयं काये कृतान्ताद्भयं**
**सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम्॥ ३४॥**

भोगे विषयाणां भोगे रोगाद्भयम् । 'पञ्चमी भयेन' इति पञ्चमीतत्पुरुषः । विषयभोगो रोगभयान्वित इत्यर्थः । कुले सद्वंशे च्युतेः भयम् । उत्तमकुलप्रसूतस्य केनापि प्रकारेण मम कुलाचारभ्रंशः स्यादिति भीतिः वर्तते । वित्ते द्रव्ये नृपालाद्भयम् । राजा कदाचिद्द्रव्यं हरिष्यतीति । दैन्यभयं दीनस्य भावो दैन्यं तस्मात् । बले अङ्गबले सैन्ये वा । खलभयं दुष्टपुरुषेभ्यो भयम् । सज्जनगुणासहनमेव खलानां कुलव्रतम् । काये देहधारणे कृतान्तात् यमाद्भयम् । यज्जन्यं तत्मर्त्यमिति न्यायात् । स्पष्टमन्यत् ।

**अमीषां प्राणानां तुलितबिसिनीपत्रपयसां**
**कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम् ।**
**यदाढ्यानामग्रे द्रविणमदनिःसंज्ञमनसां**
**कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ ३५ ॥**

तुलितं तुलां प्रापितं बिसिन्याः कमलिन्याः पत्रेषु यत्पयः तद्बिसिनीपत्रपयः येषां तेषाममीषां प्राणानां कृते अर्थे विगलितः विवेकः येषां तैरस्माभिः

---

34. Enjoyments are exposed to dangers from disease, noble birth is liable to a fall, wealth is exposed to danger from the king, dignity to misfortune, an army to fear from the enemy, beauty to danger from old age, knowledge of S'ástra to controversy, merit to danger from wicked men, and body to the fear of death; all objects are thus beset with danger; asceticism alone is invulnerable on earth.

35. For the sake of this life ( lit. these vital airs ) that are compared to water on a lotus-leaf, what indeed have we, destitute of discernment, not done ?—when in the presence of the rich whose minds are blinded by the pride of wealth, we, shameless that we are, have committed the sin of setting forth our own virtues.

---

३४ माने–मौने. जराया–तरुण्या; वाद–वादि.

३५ यदाढ्या–यदज्ञा० निःसंज्ञ–निःशंक; वीत–म्लान, कथाख्यानकमपि.

किं न व्यवसितं । सर्वमकार्यमपि कृतमित्यर्थः । किं तदित्याकाङ्क्षायामाह । यत् यतः द्रविणस्य धनस्य मदो गर्वः तेन निःसंज्ञं संज्ञारहितं मनो येषां तेषामाढ्यानां धनपूर्णानामग्रे वीता निर्गता व्रीडा लज्जा येषां तैर्निर्लज्जैः निजगुणानां कथा कीर्तनं तदेव पातकं कल्मषं तदपि कृतम् ।

सा रम्या नगरी महान्स नृपतिः सामन्तचक्रं च त-
त्पार्श्वे तस्य च सा विदग्धपरिषत्ताश्चन्द्रबिम्बाननाः ।
उद्रिक्तः स च राजपुत्रनिवहस्ते बन्दिनस्ताः कथाः
सर्वं यस्य वशादगात्स्मृतिपथं कालाय तस्मै नमः॥ ३६॥

सम्यगन्तः समन्तः तस्मिन्समन्ते भवः सामन्तः । माण्डलिक इति यावत् । 'तत्र भवः' इति अण् । तेषां चक्रं समूहः । विदग्धानां विदुषां परिषत् सभा । चंद्रबिंबवदाननं यासां ताः । उद्रिक्तो गर्विष्ठः स राजपुत्राणां निवहः समूहः । बन्दिनः स्तुतिपाठकाः । इदं सर्वमपि यस्य कालस्य पलघटिकाप्रहरदिवसपक्षमासर्त्वयनसंवत्सरादिलक्षणस्य मृत्योर्वा वशाद् वशवर्तित्वात् स्मृतिपथं स्मरणपदवीमगात् । अनुभवयोग्यताविरहाद्बुद्धेर्द्वितीयावस्थापन्नं संवृत्तमित्यर्थः । तस्मै नमः ।

वयं येभ्यो जाताश्चिरपरिगता एव खलु ते
समं यैः संवृद्धाः स्मृतिविषयतां तेऽपि गमिताः ।
इदानीमेते स्मः प्रतिदिवसमासन्नपतना
गतास्तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ ३७ ॥

येभ्यः पितृपितामहादिभ्यः । ते परिगताः मृताः । स्मृतिविषयतां स्मृति-

---

36. That delightful city, that great king, and the circle of feudatory kings, and that assembly of eminent scholars at his side, the ladies ( of the court ) with their faces, like the disc of the moon, and that group of haughty princes, those bards, and those stories—bow to Death through whose influence all these things have become things of the past ( lit. things to be remembered ).

37. Those from whom we were born have long since passed

---

३६ रम्या सा, भ्रातः कष्टमहो. सा विदग्धपरिषत्—सापि राजपरिषत्, सा विदग्धवनिता. उद्रिक्तः—उत्सिक्तः; उन्मत्तः, सद्वृत्तः, स्मृतिपथं—० पदम्.

३७ चिरमपगताः; स्मृति०—स्मरणपदवीम्.

गोचरतां। आसन्नमुपस्थितं पतनं येषां ते। सिकताः सन्त्यस्मिन्देशे इति सिकतिलः। 'देशे लुबिलचौ च' इति इलच् प्रत्ययः। एवंविधा या नदी तस्यास्तीरतरुभिः कूलस्थवृक्षैः सह तुल्यावस्थां समावस्थां गताः।

यत्रानेके क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र नैकोपि चान्ते।
इत्थं चेमौ रजनिदिवसौ दोलयन्द्वाविवाक्षौ
कालः काल्या भुवनफलके क्रीडति प्राणिशारैः॥ ३८॥

इत्थं उक्तप्रकारेण इमौ रजनिदिवसौ रात्रिदिवसौ द्वौ अक्षौ इव दोलयन् प्रक्षिपन् कालः काल्या स्वशक्त्या सह। भुवनमेव फलकं तस्मिन्। प्राणिन एव शाराः काष्ठनिर्मितद्यूतोपकरणानि। सोंगट्या इति प्राकृते प्रसिद्धिः। तैः क्रीडति।

तपस्यन्तः सन्तः किमधिनिवसामः सुरनदीं
गुणोदारान्दारानुत परिचरामः सविनयम्।
पिबामः शास्त्रौघानुत विविधकाव्यामृतरसा-
न्न विद्मः किं कुर्मः कतिपयनिमेषायुषि जने॥ ३९॥

तपस्यन्तः तपोनुष्ठानं कुर्वन्तः सन्तः सुरनदीं भागीरथीमधिनिवसामः वासं कुर्मः। 'उपान्वध्याङ्वसः' इति द्वितीया। किम्। उत अथवा

---

away; those too, with whom we grew up, have been consigned to the region of memory; now here we are, with our fall approaching nearer and nearer day by day, reduced to the same state as that of trees (growing) on the bank of a sandy river.

38. In a certain house where there were many, there (now) stands a solitary person; even there where there was one man and many following him, there is not one left at last; thus revolving day and night as if they were two dice, the God of Death plays (at dice) with his wife Kálî making mortals their dice-pieces and the earth the board.

39. In this world in which life is to be measured by a

---

३८ अनेके-अनेकः; नैकोपि०-चान्ते न चैकः; भुवनफलके-सह बहुकलः.
३९ सवियान्; शास्त्रार्थान्.

गुणैरुदारान् दारान् स्त्रीः सविनयं विनयेन सह यथा स्यात्तथा परिचरामः। शास्त्राणामोघाः समूहास्तान्। उत विविधानि काव्यानि रामायणरघुकिराता- दीनि तान्येव तेषां वामृततुल्यान् रसान् पिबामः। इति कतिपया निमेषा आयुर्यस्य तस्मिन् जने लोके किं कुर्म इति न विद्मः न जानीमः।

गङ्गातीरे हिमगिरिशिलाबद्धपद्मासनस्य
ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य।
किं तैर्भाव्यं मम सुदिवसैर्यत्र ते निर्विशङ्काः
कण्डूयन्ते जरठहरिणाः स्वाङ्गमङ्गे मदीये॥ ४०॥

गङ्गायास्तीरे हिमगिरेः शिलायां बद्धं पद्मासनम्। ऊरुमूले वामपादं पुनस्तु दक्षिणं पदं। वामोरौ स्थापयित्वा तु पद्मासनमिति स्मृ- तम्॥ इत्युक्तलक्षणं येन तस्य। ब्रह्मणः ध्यानं। 'तत्र- प्रत्ययैकतानता ध्यानम्' इति योगसूत्रलक्षितं ध्येयैकप्रत्ययस्य तैलधाराव- दविच्छिन्नवृत्तित्वम्। तस्य अभ्यसनं अभ्यासो पुनः पुनरनुष्ठानम्। 'अभ्यासो नाम चित्तभूमौ कस्यांचित्समानप्रत्ययावृत्तिश्चित्तस्य' इति आचार्योक्तिः। तस्य विधिना करणेन योगनिद्रां संप्रज्ञातसमाधिं गतस्य प्राप्तस्य मम तैः सुदिवसैः पुण्यदिवसैः भाव्यं किम्। एवंविधान् पुण्यदिवसानहं पश्यामि किमिति यावत्। यत्र दिवसेषु। जरठाः वृद्धा हरिणाः निर्विशङ्काः निर्भयाः सन्तः। कण्डूयन्ते। डित्थपाषाणमिव चेतनरहितं जडपदार्थं मां ज्ञात्वेति पूरणम्। एकान्तवासी 'यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः' इति सर्वसाम्यावस्थः बहिर्वि- षयविज्ञानरहितश्च कदा भविष्यामीति चिन्ता द्योतितास्मिन्पद्ये।

few winkings of the eye, we do not know what to do, whether we should taste nectarious juice of diverse kinds of poetry, or drink the streams of philosophy; whether we should modestly lead a householder's life in company with a wife ennobled by virtues; or whether we should dwell on the banks of the heavenly river practising penance.

40. Can those blessed days be ( in store ) for me, when I having fixed myself in the *Padmásana* posture on a slab in

४० यत्र-येषु; कण्डूयन्ते इ०—शृङ्गमङ्गे, संप्राप्स्यन्ते जरठहरिणाः शृङ्गकण्डू- विनोदम्.

स्फुरत्स्फारज्योत्स्नाधवलिततले क्वापि पुलिने
सुखासीनाः शान्तध्वनिषु रजनीषु द्युसरितः ।
भवाभोगोद्विग्नाः शिव शिव शिवेत्यात्तवचसः
कदा स्यामानन्दोद्गतबहुलबाष्पाप्लुतदृशः ॥ ४१ ॥

स्फुरन्ती या स्फारा बहुला जोत्स्ना कौमुदी तया धवलितं तलं यस्मिन् । सुखेनासीनाः अनायासेन स्थिताः । शान्तः ध्वनिः यासु तासु रजनीषु रात्रिषु । द्युसरितः स्वर्धुन्याः । भवस्य संसारस्य भवानां जन्मनां वा आभोगः विस्तारस्तेन उद्विग्नाः उद्वेगं प्राप्ताः । शिव शिवेति आत्तं गृहीतं वचः यैः ते । आनन्देन उद्गता ये बहुलाः बाष्पाः तैः आप्लुताः दृशः येषां ते । कदा कस्मिन्काले स्याम भवाम ।

महादेवो देवः सरिदपि च सैवामरसरि-
द्गुहा एवागारं वसनमपि ता एव हरितः ।
सुहृद्वा कालोयं व्रतमिदमदैन्यव्रतमिति
कियद्वा वक्ष्यामो वटविटप एवास्तु दयिता ॥ ४२ ॥

महादेव एव देवः । अमरसरित् देवनदी एव सरित् । अगारं गृहम् ।

---

the Himàlayàs on the bank of the Ganges, and having gone to the sleep of concentration while in the act of constantly contemplating Bràhman, the old stags ( growing ) fearless will rub their body against mine ?

41. On nights when all sounds have been hushed up, sitting at ease somewhere on the sandy bank of the heavenly river, the surface of which ( bank ) has been whitened by the brilliant and all pervading moonlight, and grown despondent on account of the wearisomeness ( lit. magnitude or expansiveness ) of worldly existence, when shall we have our eyes flooded with copious tears proceeding from supreme bliss, we having taken ( to the repetition of ) the words " S'iva, S'iva, S'iva "?

42. Mahàdeva is the god, and the stream of the gods (the

---

४१ सुखा०—उमा०, आत्त—आर्त्त, उच—०च्चसा; आप्लुत—आकुल.

हरितः दिशः । वसनमाच्छादनम् । कालः मृत्युः । न विद्यते दैन्यं याच्ञारूपं व्रतं यस्मिन् तददैन्यव्रतमेव व्रतम् । वटविटप नैग्रोधवृक्ष एव दयिता स्त्री-स्थाने इत्यर्थः ।

**आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला**
**रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी ।**
**मोहावर्तसुदुस्तरातिगहना प्रोत्तुङ्गचिन्तातटी**
**तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥४३॥**

मनोरथाः कामाः एव जलं यस्याम् । तृष्णा लिप्सा एव तरङ्गास्तैराकुला । रागाः प्रीतिविशेषाः ते एव ग्राहा मकराः सन्त्यस्याम् । वितर्काः संकल्पविकल्पात्मकवृत्तयः विहगाः पक्षिणः यस्याम् । धैर्यं धीरता एव द्रुमाः तेषां नाशिनी । मोहा एव आवर्ताः तैः सुदुस्तरा अत्यन्तदुःखेन तरणं यस्याः सा । प्रोत्तुङ्गा प्रकर्षेणोत्तुङ्गोन्नता चिन्ता सैव तटी यस्याः सा । विशुद्धं निर्मलं मनो येषाम् । योगोऽस्ति एषां ते योगिनः तेषामीश्वराः । एवंविधायाः नद्याः पारंगताः सिद्धा निरतिशयानन्दभाजो भवन्ति । अन्ये कलुषितान्तःकरणा अस्यां निमज्जन्तः सन्तः क्लिश्यन्तीति तात्पर्यम् ।

---

Ganges ) alone is the stream (for me); caves are (my) abode, and even the quarters ( my ) raiment; the Destroyer is ( to me ) as a friend; and my vow—such conduct ( as is ) free from meanness; or why say more ( on this subject ), let me be wedded to the *Vata* tree alone ( lead a life of seclusion and piety ).

43. Desire is, indeed, a river, having for its water the objects of desire, agitated by waves in the form of covetousness, having for sharks the passions, and for birds the misgivings ( of the heart ), destroying the tree of courage, difficult to cross on account of eddies in the form of infatuation, very deep and having anxiety for its steep ( lit. high ) banks; the great ascetics of pure heart, who have crossed it ( the river ) are happy !

---

४३ धैर्य-धर्म; तटी-अटवी.

आसंसारं त्रिभुवनमिदं चिन्वतां तात ताद-
ङ्नैवास्माकं नयनपदवीं श्रोत्रवर्त्मागतो वा ।
योयं धत्ते विषयकरिणीगाढगूढाभिमान-
क्षीबस्यान्तःकरणकरिणः संयमालानलीलाम् ॥ ४४ ॥

आसंसारं संसारमभिव्याप्य इदं त्रिभुवनं चिन्वतां मार्गयतामस्माकं नयनयोः पदवीं मार्गं श्रोत्रयोः श्रवणयोः वर्त्म मार्गं वा नागतः । न दृष्टो न श्रुतो वेति यावत् । विषया एव करिणी हस्तिनी तस्यां गाढः अत्यन्तः गूढः निभृतः योऽभिमानस्तेन क्षीबस्य मत्तस्य । अंतःकरणमेव करी हस्ती तस्य संयमः निग्रह एव आलानं गजबन्धनं तस्य लीलाम् । अन्तःकरणनिग्रहे समर्थ इत्यर्थः ।

ये वर्धन्ते धनपतिपुरःप्रार्थनादुःखभाजो
ये चाल्पत्वं दधति विषयाक्षेपपर्यस्तबुद्धेः ।
तेषामन्तःस्फुरितहसितं वासराणां स्मरेयं
ध्यानच्छेदे शिखरिकुहरग्रावशय्यानिषण्णः ॥ ४५ ॥

धनपतेः पुरः प्रार्थना याच्ञा तस्या दुःखं भजतीति दुःखभाक् तस्य । वर्धन्ते दीर्घा भवन्ति । विषयाणामाक्षेपः आकर्षणं तेन पर्यस्ता व्याकुला बुद्धिर्यस्य । अन्तः स्फुरितं हसितं यथा स्यात्तथा । ध्यानच्छेदे व्युत्थानानन्तरम् । शिखरिणः पर्वतस्य कुहरे विवरे यो ग्रावा पाषाणः स एव शय्या शयने तस्यां निषण्णः उपविष्टः सन् ।

---

44. O friend, while searching this triple world as far as worldly life prevails, none such has come within the range of our sight or hearing as can easily become ( lit. possesses the facility of becoming ) the post for fastening by means of self-restraint the elephant of the mind intoxicated by the deep seated and secret attachment for the female elephant in the form of the sensual objects.

45. Seated on a stony couch in the cavern of a mountain, may I in the intervals of contemplation recall with an inward smile those days which seem to be longer to one experiencing the grief of ( having to address ) supplications

---

४४ वर्त्मा–मार्गा–मार्गम्. ४५ वर्तन्ते, ०दुःखदीर्घा.

**विद्या नाधिगता कलङ्करहिता वित्तं च नोपार्जितं**
**शुश्रूषापि समाहितेन मनसा पित्रोर्न संपादिता ।**
**आलोलायतलोचना युवतयः स्वप्नेपि नालिङ्गिताः**
**कालोयं परपिण्डलोलुपतया काकैरिव प्रेरितः ॥ ४६ ॥**

कलङ्करहिता निष्कलुषा । निर्मलेति यावत् । नोपार्जितं न संपादितम् । शुश्रूषा सेवा । समाहितेन मनसा शान्तान्तःकरणेन । आलोले चञ्चले आयते दीर्घे च लोचने नयने यासां ताः । परपिण्डे परदत्तान्ने या लोलुपता आसक्तिः तया । प्रेरितः नीत इति यावत् ।

**वितीर्णे सर्वस्वे तरुणकरुणापूर्णहृदयाः**
**स्मरन्तः संसारे विगुणपरिणामा विधिगतीः ।**
**वयं पुण्यारण्ये परिणतशरच्चन्द्रकिरणां**
**त्रियामां नेष्यामो हरचरणचित्तैकशरणाः ॥ ४७ ॥**

वितीर्णे धर्मबुद्ध्या दत्ते । सर्वं च तत्स्वं धनं तस्मिन् । तरुणा या करुणा तया पूर्णं हृदयं येषाम् । विगुणः निर्गुणः । अनिष्ट इति यावत् । परिणामः यासां ता विधिगतीः दैवविलसितानि । परिणता उपचिताः शरत्संबंधिचंद्रस्य परिणतस्य शरच्चन्द्रस्य वा किरणाः अंशवः यस्याम् । त्रियामां क्षपाम् । हरस्य चरणयोः यत् चित्तं तदेव एकं शरणं आश्रयः येषां ते । 'शरणं गृहरक्षित्रोः' इत्यमरः ।

---

to the wealthy, and which ( days ) appear to be shorter ( to one ) whose reason is set aside by the allurement of sensual objects.

46. We did not acquire untainted knowledge; nor did we amass wealth; we did not even serve our parents with a concentrated mind; * * * Like crows we have passed this period ( of our life ) craving a morsel from others.

47. Having given away every thing with a heart full of tender compassion, and remembering the course of destiny which has an adverse ending in this worldly existence, we

---

४६ युवतयः–प्रियतमाः. प्रेरितः–प्रेषितः

४७ गतीः–णामां, विरसपरिणामां गतिम्; विगुणपरिणामावधिगतिम्. वयं–कदा; किरणां–किरणैः, किरणे. चित्तैक–चिन्तैक.

**नायं ते समयो रहस्यमधुना निद्राति नाथो यदि**
**स्थित्वा द्रक्ष्यसि कुप्यति प्रभुरिति द्वारेषु येषां वचः ।**
**चेतस्तानपहाय याहि भवनं देवस्य विश्वेशितु-**
**र्निर्दौवारिकनिर्दयोक्त्यपरुषं निःसीमशर्मप्रदम् ॥ ९४ ॥**

नायं ते तव समयः । रहस्यमेकान्तम् । यदि स्थित्वा द्रक्ष्यसि तर्हि प्रभुः कुप्यति इति येषां द्वारेषु वचः । हे चेतः तान् विहाय त्यक्त्वा विश्वस्य ईशितुः । देवस्य द्वारि नियुक्तः दौवारिकः । निर्दया उक्तयः निर्दयोक्तयः । निर्गता दौवारिकस्य निर्दयोक्तयः यस्मात्तत् निर्दौवारिकनिर्दयोक्ति । अपरुषं निःसीमशर्मप्रदमत्यन्तसुखदं भवनं याहि । उन्मत्तपुरुषाणां परुषवचनश्रवणस्थानानि विहाय सर्वदातारं करुणाकरं परमेश्वरं शरणमन्विच्छेति भावः ।

**प्रियसखि विपद्दण्डव्रातप्रपातपरम्परा-**
**परिचयचले चिन्ताचक्रे निधाय विधिः खलः ।**
**मृदमिव बलात्पिण्डीकृत्य प्रगल्भकुलालव-**
**द्भ्रमयति मनो नो जानीमः किमत्र विधास्यति ॥ ९५ ॥**

हे प्रियसखि । खलो विधिः विपदेव दण्डः तस्य व्रातस्य समूहस्य प्रपातः तस्य परम्परायाः परिचयेन चलतीति तत्तथोक्तं तस्मिन् । चिन्तैव चक्रं चिन्ताचक्रं तस्मिन् । मनो निधाय मृदमिव मृत्तिकामिव बलात्पिण्डीकृत्य प्रगल्भश्चासौ कुलालश्च तद्वत् चतुरकुम्भकारवत् भ्रमयति भ्रमणं कारयति । अत्र स विधिः किं विधास्यति करिष्यतीति न जानीमः ।

---

94. Oh heart, leave those at whose gate (are heard) such replies as "this is not the time for you (to see the master)," "(he is) now in private," "the master is asleep" and "if you were to see him after waiting he would get angry"; and do you go to the temple of the Lord, the ruler of the world, which gives unbounded happiness, and which is free from harshness, the cruel words of gatekeepers not being heard there.

95. Beloved one, wicked fate, having like a skilful potter, rolled our mind into a ball as if it were clay, whirls it round

---

९४ निर्दौ०—र्नो दौवारिकनिर्दयोक्तिपरुषम्.

९५ दण्डव्रात—प्रान्त. प्रपात—प्रताप. परिचयचले—परिधिचपले.

महेश्वरे वा जगतामधीश्वरे
जनार्दने वा जगदन्तरात्मनि ।
तयोर्न भेदप्रतिपत्तिरस्ति मे
तथापि भक्तिस्तरुणेन्दुशेखरे ॥ ९६ ॥

जगतामधीश्वरे जगन्नियामके महेश्वरे । सगुणब्रह्मणीति यावत् । जगदन्तरात्मनि जगद्व्यापिनि वा जनार्दने । तयोः उभयोर्मध्ये भेदप्रतिपत्तिः भेदज्ञानं नास्ति तथापि मे मम भक्तिः तरुणश्चासौ इन्दुश्च स शेखरे यस्य तस्मिञ्शंकरे अतिशयेन वर्तते इति भावः ।

रे कन्दर्प करं कदर्थयसि किं कोदण्डटङ्कारितै
रे रे कोकिल कोमलैः कलरवैः किं त्वं वृथा जल्पसि ।
मुग्धे स्निग्धविदग्धमुग्धमधुरैर्लोलैः कटाक्षैरलं
चेतश्चुम्बितचन्द्रचूडचरणध्यानामृतं वर्तते ॥ ९७ ॥

रे कन्दर्प पञ्चशर, कोदण्डस्य टङ्कारितैः टणत्कारैः किं वृथा निरर्थकं करं कदर्थयसि पीडयसि । रे रे कोकिल । आदरार्था वीप्सा । त्वं कोमलैः कलरवैः वृथा निष्फलं किं जल्पसि । हे मुग्धे बाले स्निग्धाश्च विदग्धाश्च मुग्धाश्च मधुराश्च तैः तथोक्तैः लोलैः चञ्चलैः कटाक्षैः अलं कृतं प्रयत्नेनेत्यर्थः । यतः अस्माकं चेतः चन्द्रः चूडायां यस्य स चन्द्रचूडः । चुम्बितं चन्द्रचूडस्य चरणयोः ध्यानमेवामृतं येन तत्तथाभूतं वर्तते । सर्वसङ्गरहिता वयमिदानीं जाता स्म इति भावः ।

---

and round by placing it on the wheel of anxiety which revolves by experiencing a series of strokes from a number of misfortunes which can be compared to a staff; we know not what fate will do.

96. Between Mahes'vara, the Lord of the worlds, and Janârdana, the Pervading Spirit of the universe, I have no conception of any difference; still my attachment is towards the new-moon-crested God.

97. Why do you, oh God of Love, trouble your hand

---

९६ तयोर्न—न वस्तु०, न भेदहेतुप्रतिपत्ति. ९७ जल्पसि—वल्गसि—मधुरैर्लोलैः—मधुराक्षेपैः.

कौपीनं शतखण्डजर्जरतरं कन्था पुनस्तादृशी
निश्चिन्तं सुखसाध्यभैक्षमशनं शय्या श्मशाने वने ।
मित्रामित्रसमानतातिविमला चिन्ताऽथ शून्यालये
ध्वस्ताशेषमदप्रमादमुदितो योगी सुखं तिष्ठति ॥ ९८ ॥

शतं खण्डानि शकलानि तैः जर्जरतरं अधिकजर्जरं कौपीनं आच्छादनम् । पुनः कन्था तादृशी तथैव इति यावत् । निश्चिन्तं चिन्तारहितं सुखेन साध्यं सुखसाध्यं च तद्भैक्षं च । 'भक्षादिभ्योऽण्' इति अण् । श्मशाने शवा शेरते ऽस्मिन्निति श्मशानं तस्मिन् प्रेतभूमौ वने वा शय्या शयनम् । मित्रामित्रयोः मित्रशत्रोः समानता समभावः । तुल्यो मित्रारिपक्षयोरिति भगवद्वचनात् । अथ शून्यालये निर्जनस्थाने अतिविमला अत्यन्तशुद्धा चिन्ता समाधिः । ध्वस्तो अशेषः मदः प्रमादश्च ताभ्यां मुदितः । ध्वस्ता ये अशेषा मदजनिताः प्रमादाः तैः मुदित इति वा । ध्वस्ताशेषप्रमाद अत एव मुदित इति वा । सर्वोपद्रवरहितः सन्योगी सुखं तिष्ठतीत्यर्थः ।

भोगा भङ्गुरवृत्तयो बहुविधास्तैरेव चायं भव-
स्तत्कस्येह कृते परिभ्रमत रे लोकाः कृतं चेष्टितैः ।
आशापाशशतोपशान्तिविशदं चेतः समाधीयतां
कामोच्छित्तिवशे स्वधामनि यदि श्रद्धेयमस्मद्वचः॥९९

---

with the twangings of your bow? Why do you, oh cuckoo, chatter ineffectually with your soft and sweet notes? Oh young woman, enough of your glances, affectionate, artful, charming, sweet and unsteady; our heart has tasted the nectar-like contemplation of the feet of the moon-crested God.

98. Happily lives the ascetic (with his) strip of cloth extremely threadbare, torn in a hundred pieces, and a wallet to match, (with his) uncared for dinner on charity got with ease, (with his) bed in a forest or a cemetery, (with his) equal regard for friends and foes, (with his) extremely serene contemplation in a secluded place, and glad that all his errors arising from pride have been corrected.

99. The different enjoyments are of a transient nature

---

९८ शय्या—निद्रा; अथ शू०—अतिशू०. मदप्रमाद—तमःप्रमोद; स्वात्मानन्दमदप्रमोद. ९९ कस्येह—कस्यैव. परिभ्रमत—०थ.

बहुविधाः बहुप्रकाराः भोगाः भङ्गुरवृत्तयः क्षणस्थायिनः तैरेव भोगैः अयं भवः संसारः । 'कारणगुणाः कार्येऽनुवर्तन्त' इति न्यायेन संसारोऽपि विनाशील्यर्थः । तस्माद्धे लोकाः इह लोके कस्य कृते कस्यार्थं यूयं परिभ्रमत भ्रमणं कुरुत । कृतं चेष्टितैः अलं व्यापारैः । आशायाः पाशाः तेषां शतानि तेषामुपशान्त्या विशदं निर्मलं चेतः अन्तःकरणम् । यदि अस्मद्वचः वचनं श्रद्धेयं श्रद्धायोग्यं तर्हि । कामानामुच्छित्त्या उच्छेदेन वशं स्वाधीनं तस्मिन् । स्वधामनि स्वाधिष्ठाने समाधीयतां स्थिरीक्रियताम् ।

**धन्यानां गिरिकन्दरे निवसतां ज्योतिः परं ध्यायता-**
**मानन्दाश्रुजलं पिबन्ति शकुना निःशङ्कमङ्केशयाः ।**
**अस्माकं तु मनोरथोपरचितप्रासादवापीतट-**
**क्रीडाकाननकेलिकौतुकजुषामायुः परिक्षीयते ॥ १०० ॥**

गिरिकन्दरे पर्वतविवरे । परं ज्योतिः स्वप्रकाशं परब्रह्म ध्यायतामनुभवतां धन्यानां कृतकृत्यानां पुरुषाणां आनन्दाश्रुजलं निशंकं शंकारहितं यथा स्यात्तथा तेषामङ्के उत्संगे शेरते इति तदङ्केशयाः शकुनाः पक्षिणः पिबन्ति । तुशब्दः पक्षान्तरद्योती । मनोरथेन उपरचितः यः प्रासादः तस्य वाप्याः तटे यत् क्रीडार्थं काननं तत्र केल्याः कौतुकं जुषन्तीति ०कौतुकजुषः तेषाम् । यद्वा मनोरथोपरचितः प्रासादश्च वापीतटं च क्रीडाकाननं च तेषु इत्यादि योज्यम् । अस्माकं पूर्वोक्तविपरीतवृत्तीनां आयुः आयुष्यं परिक्षीयते । पूर्वोक्तानां धन्यानां जीवितं सफलमस्माकं तु व्यर्थमित्यर्थः ।

---

and by them is constituted this worldly life; what for should you then wander, oh people? Refrain from your actions. If our word is to be believed, concentrate your mind, pure on account of the snapping of the bonds of desires, within its cell which can be controlled when passion has been rooted out.

100. Of the blessed persons who dwell in the hollows of mountains and contemplate the supreme light, birds drink the tears of delight, fearlessly resting on their laps; our life on the other hand is being wasted, we enjoying the delight of sports in pleasure gardens adjoining the moat (lit. a well) of a castle reared by our imagination.

---

१०० ०श्रुजलं–०श्रुकणान्; मनोरथैः परिचित; परिक्षीयते–परं क्षी०.

आक्रान्तं मरणेन जन्म जरया विद्युच्चलं यौवनं
संतोषो धनलिप्सया शमसुखं प्रौढाङ्गनाविभ्रमैः ।
लोकैर्मत्सरिभिर्गुणा वनभुवो व्यालैर्नृपा दुर्जनै-
रस्थैर्येण विभूतयोऽप्युपहता ग्रस्तं न किं केन वा ॥१०१॥

मरणेन जन्म आक्रान्तं व्याप्तम् । अस्योत्तरत्राप्यनुकर्षः । विद्युद्वच्चलं चञ्चलम् । धनलिप्सया धनप्राप्तीच्छया शमसुखं निरुद्धान्तःकरणजन्यं सुखं प्रौढाः या अङ्गनाः तासां विभ्रमैः विलासैः आक्रान्तम् । मत्सरिभिः परगुणासहिष्णुभिः । वनभुवः वनस्थलानि । नृपा दुर्जनैः दुष्टमंत्रिभिः आक्रान्ताः । विभूतयः अस्थैर्येण अस्थिरभावेन नाशैकस्वभावेन उपहताः । अतः किं केन वा न ग्रस्तं सर्वमपि ग्रस्तम् । अतः बुद्धिमता पुरुषेण सर्वमनित्यं सदोषं च वस्तु विहाय नित्यवस्तुनि परमेश्वरे अन्तःकरणाभिनिवेशः कर्तव्य इत्यर्थः ।

आधिव्याधिशतैर्जनस्य विविधैरारोग्यमुन्मूल्यते
लक्ष्मीर्यत्र पतन्ति तत्र विवृतद्वारा इव व्यापदः ।
जातं जातमवश्यमाशु विवशं मृत्युः करोत्यात्मसा-
त्तत्किं नाम निरङ्कुशेन विधिना यन्निर्मितं सुस्थितम् ॥१०२

विविधैः बहुप्रकारैः आधिर्मानसी व्यथा व्याधिः शरीररोगः तेषां शतैः जनस्य पुरुषस्यारोग्यं शरीरस्वास्थ्यमुन्मूल्यते । तथा यत्र लक्ष्मीः ऐश्वर्यं तत्र व्यापदः विविधाः आपदः संकटानि विवृतद्वारा विवृतं द्वारमाभ्य इति ताः पतन्ति । मृत्युः कालः जातं जातं जातमात्रं विवशमाशु त्वरितं

101. Birth is beset with death; youth flitting like lightning with old age; contentment with cupidity; the felicity of renunciation with the sportive movements of youthful women; virtues with malicious people; wood-lands with serpents; kings are surrounded by wicked people; even prosperity is affected by inconstancy. Or what is there that is not smitten by something else?

102. The health of man is undermined by hundreds of mental and physical infirmities; to where there is wealth, mis-

१०१ आक्रान्तं-आघ्रातम्. विभूतिरप्युपहता, धृतिर्जगत्युपहता

१०२ ह्यापदः; जातं जातम्-आयुर्यातम्; नाम-तेन; सुस्थितं-सुस्थिरम्.

transitoriness

Helplessly

to check

मवश्यं नियमेन आत्मसात्करोति साकल्येन स्ववशं नयति । तत्किं नाम वस्तु यन्निरङ्कुशेन अप्रतिबन्धेन विधिना दैवेन प्रजापतिना वा सुस्थिरं निर्मितम् । न किञ्चिदपीत्यर्थः ।

कृच्छ्रेणामेध्यमध्ये नियमिततनुभिः स्थीयते गर्भवासे
कान्ताविश्लेषदुःखव्यतिकरविषमो यौवने चोपभोगः ।
नारीणामप्यवज्ञा विलसति नियतं वृद्धभावोप्यसाधुः
संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किंचित् १०३

अमेध्यमध्ये कुत्सितमूत्रादिमध्ये । वसत्यस्मिन्निति वासः । गर्भवासे गर्भाशये नियमिततनुभिः मर्यादितदेहैः स्थीयते । यौवने कान्तायाः विश्लेषः वियोगः तेन यद्दुःखं तस्य व्यतिकरेण सम्बन्धेन विषमः कठिनः उपभोगः । यस्मिन्नियतं निश्चयेन नारीणां स्त्रीकर्तृका अवज्ञा अवमानना विलसति स वृद्धभावोऽपि वार्धक्यमपि असाधुः । अतः रे मनुष्याः यदि संसारे किंचित् स्वल्पमपि सुखं अस्ति वदत । न किञ्चिदपि सुखमस्तीत्यर्थः ।

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं
तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः ।
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते
जीवे वारितरङ्गचञ्चलतरे सौख्यं कुतः प्राणिनाम् ॥ १०४ ॥

fortunes come thronging as if the gates are opened to them; Death hastily asserts his supremacy over every helpless creature that is born; what thing is there then, that despotic Fate has made immune from danger?

103. With their bodies cramped men have to remain with difficulty in the womb in the midst of impurities; in youth the enjoyment of pleasures is difficult on account of the distraction arising from the pain of separation from one's beloved; surely even old age is unwelcome, (for at that period) the refractoriness even of women is conspicuous; say, oh men, if there is even the least happiness in worldly life?

104. The life of men is limited to a hundred years;

१०३ गर्भवासे--०मध्ये. व्यतिकरविषमे यौवने विप्रयोगः.

१०४ वियोग-विदेश. चञ्चलतरे-बुद्बुदसमे.

'तस्यार्धस्य द्वादशवर्षाणां परस्यार्धस्य अर्धं सार्धं द्वादशवर्षाणि बाल्ये पुनः सार्धद्वादशवर्षाणि वृद्धत्वे इत्यर्थः ' इति रामर्षिः । शेषं अवशिष्टं पञ्चविंशतिवर्षसंख्याकमायुः व्याधिश्च वियोगश्च तयोः दुःखेन सहितं सेवादिभिश्च नीयते । तस्मात् प्राणिनां वारितरङ्गवत् चञ्चलतरे जीवे आयुषि सौख्यं कुतः । नास्ति सुखगन्धोऽपीत्यर्थः ।

ब्रह्मज्ञानविवेकिनोमलधियः कुर्वन्त्यहो दुष्करं
यन्मुञ्चन्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निस्पृहाः ।
न प्राप्तानि पुरा न संप्रति न च प्राप्तौ दृढप्रत्ययो
वाञ्छामात्रपरिग्रहाण्यपि परं त्यक्तुं न शक्ता वयम् ॥१०५॥

ब्रह्मज्ञानविवेकिनः ब्रह्मविषयं ज्ञानं तस्माद्विवेकः तद्वन्तः । अमलधियः अमला धीः येषाम् । शुद्धान्तःकरणाः । दुष्करं कुर्वन्ति । अहो इत्याश्चर्ये । किं तदत आह । यद् उपभोगभाञ्ज उपभोगवन्त्यपि धनानि मुञ्चन्ति । एकान्ततः निश्चयेन निःस्पृहाः निर्गतेच्छाः । पुरा भूतकाले, संप्राते वर्तमाने वा न प्राप्तानि न वा तेषां प्राप्तौ प्राप्तिविषये दृढप्रत्ययः दृढविश्वासः । तथापि वाञ्छा एव वाञ्छामात्रं तेन परिग्रहो येषां तान्यपि वयं परं अत्यन्तं यथा स्यात्तथा त्यक्तुं न शक्ताः ।

---

half of it passes away in the night; of the remaining half one-half made up of its first and last fourths is occupied by youth and old age; the remainder is passed in servitude &c., waited on by disease and grief for the separation (of relations). Whence can there be any happiness for mortals in worldly life which is even more unsteady than a wave ?

105. Those who, by the knowledge of Brahman, have acquired discrimination and possess a refined intellect, do what is hard to do, in that they renounce riches which contribute to pleasures, being absolutely unselfish; ( these ) were neither obtained before, nor are they now; nor is there any guarantee ( lit. firm belief ) as to their attainment; and although they are accessible only to our imagination ( lit. desire ) we are unable to renounce them.

---

१०५ ०विवेकनिर्मलधियः. भाञ्ज्यपि-काञ्चनध० शक्ता वयम्-तानि क्षमाः ।

**व्याघ्रीव तिष्ठति जरा परितर्जयन्ती**
**रोगाश्च शत्रव इव प्रहरन्ति देहम् ।**
**आयुः परिस्रवति भिन्नघटादिवाम्भो**
**लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ १०६ ॥**

जरा परितर्जयन्ती भर्त्सयन्ती सती व्याघ्रीव अग्रे तिष्ठति रोगाश्च शूलादयः शत्रवः प्रतिपक्षियोद्धार इव देहं प्रहरन्ति अनेकप्रकारैः प्रहारान् कुर्वन्ति । भिन्नघटात् सच्छिद्रघटाद्यथा अम्भः जलं तथा आयुः परिस्रवति क्षरति । एवमपि लोकः प्राकृतो जनः अहितमकल्याणमाचरतीति चित्रमाश्चर्यम् । आगाम्यनर्थालोचनेनापि न स्वहितेऽभिनिवेशं कुरुत इत्याश्चर्यमित्यर्थः ।

**गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्तावलि-**
**र्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते ।**
**वाक्यं नाद्रियते च बान्धवजनो भार्या न शुश्रूषते**
**हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते ॥ १०७ ॥**

गात्रं इंद्रियं संकुचितं स्वविषयग्रहणासमर्थं जातम् । गतिः गमनशक्तिः । दन्तानां आवलिः पङ्क्तिः । दृष्टिः नेत्रेन्द्रियशक्तिः । वक्त्रं च लालायते लालाप्रचुरं वर्तते । दन्ताभावात् । बान्धवानां संबन्धिनां जनः समुदायः वाक्यं नाद्रियते । शब्दानादरं करोति । भार्या सहधर्मचारिणी पत्न्यपि न शुश्रूषते न सेवते । जीर्णं वयः यस्य स जीर्णवयाः तस्य । अमित्रवदाचरति । यावत् शरीरस्वास्थ्यं तावत्सर्वेऽपि सादराः भवन्ति स्वदेहशक्तिक्षये तु न कोऽपि शब्दमात्रेणापि पृच्छतीति तात्पर्यम् ।

106. Old age stands threatening like a tigress; like enemies, diseases smite the body; life runs away like water from a broken jar; and yet, oh wonder, man commits wickedness.

107. (In old age) the body becomes emaciated, the movements are slackened, the row of teeth is displaced, the vision is obscured, deafness grows (upon man), and his mouth slobbers; the relations do not obey his order and his wife does not serve him; alas! even the son acts inimically towards an aged man.

१०६ प्रहरन्ति–प्रविशन्ति, आयुश्च संस्रवति.

क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः
क्षणं वित्तैर्हीनः क्षणमपि च संपूर्णविभवः ।
जराजीर्णैरङ्गैर्नट इव वलीमंडिततनु-
र्नरः संसारान्ते विशति यमधानीजवनिकाम् ॥ १०८ ॥

कामेषु विषयेषु रसिकः अभिज्ञः । क्षणमिति परिच्छिन्नकालवाचकः । संपूर्णः विभवः यस्य सः । जरया जीर्णानि अङ्गानि तैः नट इव नटवत् । वलीभिः मण्डिता भूषिता तनुः देहः यस्य स नरः संसारान्ते मरणानन्तरं यमस्य मृत्योः धानी नगरी सैव जवनिका 'पडदा' इति भाषायां । तां विशति । मनुष्यस्य कुशलनटवदिह संसारे आचरणं भवतीत्यर्थः ।

अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्टे वा कुसुमशयने वा दृषदि वा ।
तृणे वा स्त्रैणे वा मम समदृशो यान्तु दिवसाः
क्वचित्पुण्यारण्ये शिव शिव शिवेति प्रलपतः ॥ १०९ ॥

अहौ सर्पे । हारे स्रजि । बलवति रिपौ समर्थशत्रौ । लोष्टे मृत्पिण्डे । कुसुमानां पुष्पाणां शयनं शय्या तस्मिन् । दृषदि पाषाणे । स्त्रीणां समूहः स्त्रैणं तस्मिन् । समा दृक् यस्य तस्य । क्वचित् कुत्रापि पुण्यारण्ये बदरिकाश्रमसदृशपुण्यप्रदेशे 'शिव शिव शिव' इति प्रलपतः उच्चैर्वदतः मम दिवसाः यान्तु । यत्र कुत्रापि देशे यस्यां कस्यामपि वृत्तौ यस्य कस्यापि संगमे सततं शिवनामस्मरणं कुर्वतो ममायुर्यात्विति तात्पर्यम् ।

## ॥ इति श्रीभर्तृहरिकृतं वैराग्यशतकं संपूर्णम् ॥

108. Like an actor, a man for a time plays the child, and then for an instant the youth delighting in pleasures; for a moment he plays the part of poverty; at another he is full of prosperity; and at the close of life he retires behind the curtain of Yama's seat, his limbs wasted by old age, and his body graced by wrinkles.

109. May my days pass in some sacred forest, while muttering the words "S'iva, S'iva, S'iva" with an eye regarding equally a serpent or a wreath, a powerful enemy or a friend,

१०९ यान्तु-यान्ति. पुण्येऽरण्ये.

## MICELLANEOUS.

अकिंचनस्य दान्तस्य शान्तस्य समचेतसः ॥
सदा संतुष्टमनसः सर्वाः सुखमया दिशः ॥ १ ॥

नास्ति किंचन यस्य तस्य । दान्तस्य उपरतबहिरिन्द्रियस्य शान्तस्य निग्रहितान्तःकरणस्य समं चेतः यस्य तस्य संतुष्टमनसः प्रमुदितान्तःकरणस्य पुरुषस्य । सुखमयाः सुखप्रचुराः । सर्वदुःखकारणे मनसि परितुष्टे सति सर्वत्र सुखप्राचुर्यमनुभूयत इत्यर्थः ।

अनावर्ती कालो व्रजति स वृथा तन्न गणितं
दशास्तास्ताः सोढा व्यसनशतसंपातविधुराः ।
कियद्वा वक्ष्यामः किमिव बत नात्मन्यपकृतं
त्वया यावत्तावत्पुनरपि तदेव व्यवसितम् ॥ २ ॥

न आवर्तते इति तच्छीलः । वृथा व्यर्थं व्रजति गच्छतीति न गणितं मनसि कृतम् । तास्ताः परस्परविलक्षणाः दशाः अवस्थाः । व्यसनानां शतं तस्य संपातः पतनं तेन विधुराः विकलाः । बतेति खेदे । आत्मनि स्वस्मिन् । किमिव नापकृतं कः अपकारो न कृतः । सर्वमपि अपकृतमित्यर्थः । व्यवसितं चेष्टितम् । यावदेतत्सर्वं कृतं तावत्पुनरपि तदेव कर्तुमारब्धम् ।

---

a gem or a clod of earth, a bed of flowers or a stone, a blade of grass or a group of damsels.

1. Every thing gives happiness (lit. all directions are full of happiness) to a man who is poor, self-restrained peaceful, of an equilibrating mind, and ever content at heart.

2. Time never returns; it is passing uselessly which was never considered (by you); (you) accommodated (yourself) to the various conditions, which are adverse on account of the concurrence of a hundred difficulties; or what shall we say? What harm have you not done yourself? Every now and then you have been repeatedly doing the same.

---

२ संपात-संताप. त्वया०—किमस्माभिर्यावत्.

अभिमतमहामानग्रन्थिप्रभेदपटीयसी
गुरुतरगुणग्रामाम्भोजस्फुटोज्ज्वलचन्द्रिका ।
विपुलविलसल्लज्जावल्लीविदारकुठारिका
जठरपिठरी दुष्पूरेयं करोति विडम्बनम् ॥ ३ ॥

अभिमतः यः महामानः तस्य ग्रन्थिः तस्य प्रभेदः विश्लेषः तस्मिन्नतिशेन पटुः । गुरुतरः यः गुणानां समूहः स एव अम्भोजानि तेषां स्फुटा चासौ उज्ज्वला च चंद्रिका कौमुदी । विपुलं यथा तथा विलसन्ती या लज्जारूपा वल्ली तस्याः विदारे च्छेदे कुठारिका परशुः । जठरपिठरी उदरदरी इयं दुष्पूरा विडम्बनं करोति । उदरपूरणार्थं सर्वोपि जनः अकार्यकरणं अवाच्यवचनं अहेयहानं करोतीत्यर्थः । अहो खलु कष्टम् ।

अश्नीमहि वयं भिक्षामाशावासो वसीमहि ।
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥ ४ ॥

वयं भिक्षां अश्नीमहि अद्मः । आशा दिश एव वासः अम्बरम् । मह्याः पृष्ठे भूतले । ईश्वरैः धनाढ्यैः । नास्त्यस्माकं तैः किंचिदपि प्रयोजनम् ।

उत्तिष्ठ क्षणमेकमुद्वह गुरुं दारिद्र्यभारं सखे
श्रान्तस्तावदहं चिरं मरणजं सेवे त्वदीयं सुखम् ।
इत्युक्तो धनवर्जितेन सहसा गत्वा श्मशाने शवो
दारिद्र्यान्मरणं वरं वरमिति ज्ञात्वैव तूष्णीं स्थितः ॥ ५ ॥

हे सखे शव गुरुं दुर्वहम् । अहं श्रान्तः संसारभारवहनेन त्वदीयं मरणजं

3. The insatiable boiler of the stomach, which is clever in dissolving ( lit. cutting ) the knot of high pride which is dearly prized, which is like the bright moonshine in causing the lotus-like higher virtues to bloom, and which is like an axe in cleaving asunder the creeper-like, great and becoming modesty, causes humiliation.

4. We live on charity, cover ourselves with the directions for our garments, and lie down on the surface of the earth: what have we to do with big folks?

5. " Arise, my friend, and bear for a moment the heavy

३ विदार–वितान. ५ इत्युक्त धनवर्जितस्य वचनं श्रुत्वा.

सुखं सेवे। तदेव मे अतीव रोचते। धनेन वर्जितः तेन दरिद्रेण गत्वा। सहसा ससंभ्रमेण। दारिद्र्यान्मरणं वरं वरमिति ज्ञात्वा। वीप्सा आदरार्था। तूष्णीं मूकभावेन। 'दारिद्र्यदोषो गुणराशिनाशी' इति तु सुप्रसिद्धमेव।

**एको रागिषु राजते प्रियतमादेहार्धहारी हरो**
**नीरागेषु जनो विमुक्तललनासङ्गो न यस्मात्परः।**
**दुर्वारस्मरबाणपन्नगविषव्याविद्धमुग्धो जनः**
**शेषः कामविडम्बितान्न विषयान्भोक्तुं न मोक्तुं क्षमः॥६॥**

रागः अनुरागः अस्त्येषामिति रागिणः तेषु। प्रियतमाया देहार्धं हरतीति तच्छीलः। निर्गतः रागः येषां तेषु। विमुक्तः ललनाया आसङ्गः येन सः। यस्मात् हरात् परः अन्यः। दुर्वारा ये स्मरः कामः तस्य बाणा एव पन्नगाः सर्पाः तेषां विषेण व्याविद्धः अत एव मुग्धः शेषो जनः कामेन विडम्बितान् विषयान् भोक्तुं मोक्तुं च न क्षमः समर्थः।

**एता हसन्ति च रुदन्ति च कार्यहेतो-**
**र्विश्वासयन्ति च परं न च विश्वसन्ति।**
**तस्मान्नरेण कुलशीलसमन्वितेन**
**नार्यः श्मशानघटिका इव वर्जनीयाः॥७॥**

एताः स्त्रियः कार्यहेतोः कार्यार्थं हसन्ति आनन्दप्रदर्शनं कुर्वन्ति रुदन्ति

---

burden of my poverty. I am now fatigued, and shall long enjoy the happiness you enjoyed from death." Thus addressed by a poor man who had hurried to the cemetery, the corpse remained silent, knowing that death was better, far better, than destitution.

6. Among worldly-minded persons stands conspicuous S'iva, who took (for himself) half the body of his beloved, and to whom there is none superior among worldrenouncing men, who has given up his attachment for women; the rest of the people smitten with the poison of the cobra-like and irresistible shafts of love, and therefore maddened, are able neither to enjoy nor to reject pleasures mocked by the God of Love.

7. These (*i. e.* women) laugh and cry for some purpose;

---

७ कार्य०-वित्तहेतोः, च परं-पुरुषं; नार्यः-वेश्याः.

रोदनं कुर्वते परं पुरुषं च विश्वासयन्ति स्वस्मिन् विश्रम्भं कारयन्ति स्वतस्तु न कस्मिन्नपि विश्वसन्ति तस्मान्नरेण कुलं च शीलं च ताभ्यां समन्वितेन नार्यः स्त्रियः श्मशाने या घटिकाः मृत्पात्रविशेषाः ता इव वर्जनीयाः दूरतः परिवर्जनीयाः । तासां अनर्थहेतुत्वात् ।

कदा वाराणस्याममरतटिनीरोधसि वस-
न्वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् ।
अये गौरीनाथ त्रिपुरहर शम्भो त्रिनयन
प्रसीदेत्याक्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ८ ॥

वाराणस्यां काश्याममरतटिन्याः भागीरथ्याः रोधसि तटे वसन् । अञ्जलिरेव पुटं निदधानः । अये गौरीनाथ त्रिपुरहर शम्भो त्रिनयन मे प्रसीद इत्याक्रोशन् आक्रोशं कुर्वन् निमिषमिव दिवसान् कदा नेष्यामि । अत्यन्तोत्सुकोऽपि अस्या अवस्थायाः न जाने कदाहं पूर्णमनोरथो भविष्यामीत्यर्थः ।

कार्कश्यं स्तनयोर्दृशोस्तरलतालीकं मुखे श्लाघ्यते
कौटिल्यं कचसंचये च वदने मान्द्यं त्रिके स्थूलता ।
भीरुत्वं हृदये सदैव कथितं मायाप्रयोगः प्रिये
यासां दोषगणो गुणो मृगदृशां ताः स्युः पशूनां प्रियाः ॥९॥

स्तनयोः कर्कशस्य भावः कार्कश्यं काठिण्यं दोषपक्षे निर्दयता । दृशोः

---

make ( others ) confide ( in them ) but ( themselves ) confide not; therefore a man possessed of nobility of birth and character should abandon women as one does a jar in the cemetery.

8. When shall I pass my days like a moment crying out " Have mercy, oh Lord of Gaurî, Destroyer of the Three Cities, oh S'ambhu, oh Three-Eyed God," having placed on my head my folded palms, wearing a small strip of cloth, and residing in Vârâṇasî ( Benares ) on the bank of the river of gods.

9. To brutes alone would be dear those fawn-eyed ( women ) whose faults are their recommendation ( lit. merit ):—whose hardness of the breasts, unsteadiness of

---

१ ताः स्युः०–ताः किं नराणाम्.

नेत्रयोः तरलता चञ्चलता पक्षे अस्थिरता । मुखे अलीकं ललाटदेशः पक्षे अनृतभाषणं श्लाघ्यते प्रशस्यते । कचसंचये केशपुञ्जे कुटिलस्य भावः कौटिल्यं वक्रता । वदने मान्द्यं गम्भीरता त्रिके पृष्ठवंशाधारभागे स्थूलता । मायाप्रयोगः वञ्चनाप्रचुरचेष्टा । यासां मृगदृशां मृगनयनानां दोषाणां गणः समूहोऽपि गुणः ताः स्त्रियः पशूनां प्रियाः । न तु मनुष्याणाम् । अतः ये एवंविधासु स्त्रीषु गुणदृष्टिं कुर्वन्ति ते पशव इत्यर्थः ॥

**क्वचिद्वीणावादः क्वचिदपि च हाहेति रुदितं**
**क्वचिद्विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहः ।**
**क्वचिद्रामा रम्याः क्वचिदपि गलत्कुष्ठवपुषो**
**न जाने संसारः किममृतमयः किं विषमयः ॥ १० ॥**

वीणावादः वीणावादनम् । विदुषां गोष्ठी शास्त्रप्रचुरा कथा । सुरया मत्तानां कलहः । गलत् प्रस्रवत् कुष्ठं यत्र तादृक् वपुः येषां ते तथा । संसारः अमृतमयः सुखप्रचुरः विषमयः दुःखप्रचुरो वा न जाने । प्राचुर्ये मयट् । परस्परविरुद्धावस्थावलोकनान्निश्चयाभाव इत्यर्थः ।

**गात्रैर्गिरा च विकलश्चटुमीश्वराणां**
**कुर्वन्नयं प्रहसनस्य नटः कृतोसि ।**
**तं त्वां पुनः पलितकर्णकभाजमेनं**
**नाट्येन केन नटयिष्यति दीर्घमायुः ॥ ११ ॥**

गात्रैः गिरा च विकलः । चटुं चाटुभाषितम् । प्रहसनस्य हास्यरसप्रधान-

---

the eyes, and falsehood on the tongue ( lit. mouth) are praised; crookedness of the hair, dullness of the face, and plumpness of the hips, commended; and timidity of the heart and deceitful tricks towards their beloved ( husbands ) always mentioned ( with approbation ).

10. In some places there is music of the lute, in others cries of alas ! alas ! ; in some places there is the conversation of learned men, in others the brawls of men intoxicated with drink; in some places there are charming ladies, in others women with leprous bodies; I do not know whether worldly life is full of sweets or bitters.

11. Deformed in limbs and lisping in speech, here are

---

१० विणावाद्यम्.

नाटकविशेषस्य । पलितयुतौ कर्णौ तौ एव कर्णकौ भजतीति भाजं । नाट्येन अवस्थानुकृतिना । दीर्घे प्रविततम् ।

**चला लक्ष्मीश्चलाः प्राणाश्चलं जीवितयौवनम् ।**
**चलाचले च संसारे धर्म एको हि निश्चलः ॥ १२ ॥**

चला चञ्चला लक्ष्मीः संपत् कांतिर्वा । जीवितं च यौवनं च जीवतयौवनम् । चलाचले चञ्चले धर्म एव एको निश्चलः नित्यः ।

**चूडोत्तंसितचारुचन्द्रकलिकाचञ्चच्छिखाभासुरो**
**लीलादग्धविलोलकामशलभः श्रेयोदशाग्रे स्फुरन् ।**
**अन्तः स्फूर्जदपारमोहतिमिरप्राग्भारमुच्चाटयं-**
**श्चेतःसद्मनि योगिनां विजयते ज्ञानप्रदीपो हरः ॥ १३ ॥**

चूडायां केशपाश उत्तंसिता भूषणीकृता चारुः सुन्दरा या चन्द्रकलिका चंद्रकला तस्याः चञ्चन्त्यः स्फुरन्त्यो याः शिखाः किरणास्ताभिर्भास्वरः । लीलया दग्धः विलोलः कामरूपशलभः कीटविशेषः येन सः । श्रेयः शिवं तस्य दशा अवस्था तस्याः अग्रे । अन्तःस्फूर्जन् अन्तःकरणे प्रसरन्त्यः अपारः मोहः स एव तिमिरं तमः तस्य प्राग्भारं संहतिमुच्चाटयन् विनाशयन् । ज्ञानरूपप्रदीपो हरः योगिनां ध्यायिनां चेतःसद्मनि चेतोमंदिरे विजयते उत्कर्षेण वर्तते । तेन त्वं प्रणतोस्मीत्यर्थो लभ्यते ।

---

you that have been made the buffoon of a farce, while flattering; what part (I do not know) will prolonged life make you play, such as you are, with your ears bordered with grey hair.

12. Wealth is evanescent, life is unsteady, and youth in life is fickle; in worldly existence which is fleeting merit alone is unchangeable.

13. Hara, the lamp of knowledge, shines bright in the heart of ascetics as if it were a house, being resplendent with the beautiful digit of the moon worn on his crest, as if it were a flickering flame, shaking at the top of wick-like happiness, having with ease burnt the unsteady Káma (God

---

१३ भास्वरः; उच्चाटयन्-उच्छेदयन्.

चेतश्चिन्तय मा रमां सकृदिमामस्थायिनीमास्थया Earnestly.
भूपालभ्रुकुटीकुटीविहरणव्यापारपण्याङ्गनाम् ।
कन्थाकञ्चुकिताः प्रविश्य भवनद्वाराणि वाराणसी-
रथ्यापङ्क्तिषु पाणिपात्रपतितां भिक्षामपेक्षामहे ॥ १४ ॥

हे चेतः सकृदपि आस्थया आस्थापूर्वकं इमां अस्थायिनीं क्षणभङ्गुरां रमां लक्ष्मीं मा चिन्तय । कथंभूता पुनः सा रमेत्यत आह भूपालेति । भूपालानां भ्रुकुटी एव कुटी गृहं तत्र विहरणमेव व्यापारः तत्र पण्याङ्गना ताम् । कन्थाकञ्चुकिताः कन्थया कञ्चुकिताः संजातकञ्चुकाः सन्तः वयं वाराणस्यां या रथ्या मार्गाः तासां पङ्क्तिषु भवनद्वाराणि गृहद्वाराणि प्रविश्य पाणिः एव पात्रं तस्मिन् पतितां भिक्षां अपेक्षामहे इच्छाम इत्यर्थः ।

जातः कूर्मः स एकः पृथुभुवनभरायार्पितं येन पृष्ठं
श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं यत्र तेजस्विचक्रम् ।
संजातव्यर्थपक्षाः परहितकरणे नोपरिष्टान्न चाधो
ब्रह्माण्डोदुम्बरान्तर्मशकवदपरे जन्तवो जातनष्टाः ॥ १५ ॥

येन कूर्मेण पृथु यद्भुवनं तस्य भराय भारधारणार्थं पृष्ठं स्वपृष्ठं अर्पितं दत्तम् । ध्रुवस्य जन्म श्लाघ्यं स्तुत्यं यत्र यस्मिन्ध्रुवे नियमितं तेजस्विचक्रं देदीप्यमानतारामण्डलं भ्रमति । नोपरिष्टान्न चाप्यधः न कथमपि परहितस्य परोपकारस्य

---

of Love ) as if he were a moth, and expelling the dense darkness of unbounded infatuation appearing inside ( *i. e.* in the heart ).

14. Do not even for once, oh heart, think fervidly of this unstable wealth which is like a harlot sporting in the houselike eyebrow of kings; ( for now ) entering through the gates of houses in Benares clad in a wallet we await in the line of its streets for alms dropped into the palm of our hand which serves us as a pot.

15. The Tortoise alone was born that offered to bear on his back ( lit. offered his back for ) the heavy burden of the world; the birth of Dhruva ( alone ) is to be praised, regu-

---

१४ कुटीवि०–कुटीरविहरव्या. १५ पृथु०–०वनमथ स्थापितं येन पृष्ठे; परहितकरणे०–०करणं नो करिष्यन्न वार्थम्.

करणे संजाताश्च ते विगतोऽर्थो येषां ते व्यर्थाश्च पक्षा येषां ते। पक्षे संजाताश्च ते व्यर्थौ पक्षौ स्वार्थपरमार्थलक्षणौ येषां ते। ब्रह्माण्डमेव उदुम्बरं तस्यान्तरे मध्ये ये मशकास्तद्वदपरे जन्तवः जातनष्टाः जाताः नष्टाश्च। 'जायस्व म्रियस्व इत्येतत्तृतीयं स्थानं' इति श्रुतेः।

**तुङ्गं वेश्म सुताः सतामभिमताः संख्यातिगाः संपदः**
**कल्याणी दयिता वयश्च नवमित्यज्ञानमूढो जनः।**
**मत्वा विश्वमनश्वरं निविशते संसारकारागृहे**
**संदृश्य क्षणभङ्गुरं तदखिलं धन्यस्तु संन्यस्यति॥ १६॥**

तुङ्गं उच्छ्रितं वेश्म गृहं सतां सज्जनानां अभिमताः सुताः पुत्राः। संख्यामतिक्रम्य गच्छन्तीति संख्यातिगाः संपदः संपत्तयः। कल्याणी दयिता स्त्री नवं च वयः। इत्याकारकेण अज्ञानेन मूढो जनः इदं विश्वं अनश्वरं नित्यं मत्वा संसाररूपकारागृहे बंदिवासे निविशते। 'नेर्विशः' इति आत्मनेपदम्। परंतु कश्चिद्धन्योऽपरः तदखिलं सर्वं जगत् क्षणभङ्गुरं त्रिक्षणावस्थायि संदृश्य संन्यस्यति परिव्रजति। सर्वसंगपरित्यागं कुर्वाणः पुरुषः क्वचित्कश्चिदेव आश्चर्यवत् दृश्यत इति एकवचनप्रयोगेण सूचितम्।

**ददतु ददतु गालीर्गालिमन्तो भवन्तो**
**वयमपि तदभावाद्गालिदानेऽसमर्थाः।**
**जगति विदितमेतद्दीयते विद्यमानं**
**न हि शशकविषाणं कोपि कस्मै ददाति॥ १७॥**

---

lated by whom, the planetary system revolves; other creatures in the world are, like the insects in an *udumbara* fruit which possess wings to no purpose, as it were born and dead ( simultaneously ), since they are not able in any way to do good to other ( and since ) ( both ) the present world and the next have become unavailable to them.

16. A man infatuated on account of ignorance, enters on a worldly career which is like a prison, believing the world to be constant, on seeing the prime of life, the lovely wife, the boundless wealth, the sons esteemed by the good, and the towering mansion; but the lucky man renounces the world, knowing it all to be perishable in a moment.

17. Possessed of abuses as you are, you may pour abuses

गालिमन्तः गालयः सन्ति एषां ते भवन्तः । निन्दायां मतुप् । गालीः ददतु ददतु नाम । तदभावाद्गाल्यभावात् । वयमपि तासां दाने असमर्थाः । विद्यमानं वस्तु दीयते अन्यस्मै इत्येतज्जगति विदितं प्रसिद्धं हि यस्मात् शशकविषाणं शशशृंगं न कोपि कस्मै ददाति । तस्यात्यन्ताभावात् ।

**न भिक्षा दुष्प्रापा पथि मम महारामरचिते**
**फलैः संपूर्णा भूर्विटपिमृगचर्मापि वसनम् ।**
**सुखैर्वा दुःखैर्वा सदृशपरिपाकः खलु तदा**
**त्रिनेत्रं कस्त्यक्त्वा धनलवमदान्धं प्रणमति ॥ १८ ॥**

महारामैः उद्यानैः स्वानन्देन वा रचिते पथि भिक्षा न मम दुष्प्रापा । यतो भूः भुमिः फलैः संपूर्णा । विटपिचर्म वृक्षत्वक् मृगचर्म कृष्णाजिनमपि वसनं वस्त्रम् यदा । खलु निश्चये । सुखैः दुःखैर्वा सदृशपरिपाकः समपरिणामः तदा त्रिनेत्रं शंकरं त्यक्त्वा विहाय कः सुधीः धनलवेन मदः तेन अन्धः तं प्रणमति । न कोऽपीत्यर्थः ।

**नो खड्गप्रविदारिताः करटिनो नोद्वेजिता वैरिण-**
**स्तन्वङ्ग्या विपुले नितम्बफलके न क्रीडितं लीलया ।**
**नो जुष्टं गिरिराजनिर्झरझगज्झांकारकारं पयः**
**कालोयं परपिण्डलोलुपतया काकैरिव प्रेरितः ॥ १९ ॥**

खड्गेन करटिनः अरिहस्तिनः न प्रविदारिताः वैरिणः नोद्वेजिताः न उद्वेगं

aye, you may; for want of them, we are unable to give you abuses; it is known all the world over, that what there is can be given; no one ever gives to another the horn of a hare.

18. Alms are not unattainable to me in my path lined by rich gardens; the earth is full of fruits, and the skins of deer and the barks of trees ( serve as ) raiment; with joys or with sorrows, there is in fact the same result. Who will then give up the Three-eyed God, and bow to the man blinded by the pride for a particle of wealth ?

19. With a sword we did not cut asunder elephants; we

१८ भूर्मृग०–भूर्द्विपमृगसु०; सुखैः०–सुखे वा दुःखे वा.

१९ नितम्ब–निबद्ध. पयः–वयः.

प्रापिता: । लीलया तन्वङ्ग्याः सुकुमाराङ्ग्याः विपुले विस्तीर्णे नितम्बफलके कटिपुरोभाग एव फलकं तस्मिन् न क्रीडितम् । गिरीणां राजा तस्मात् यः निर्झरः झरः तस्य झणज्झांकारं करोतीति तत्पयः नो जुष्टं न सेवितम् । परपिण्डे लोलुपता तया ।

**परिभ्रमसि किं वृथा क्वचन चित्त विश्राम्यतां**
**स्वयं भवति यद्यथा भवति तत्तथा नान्यथा ।**
**अतीतमपि न स्मरन्नपि च भाव्यसंकल्पय-**
**न्नतर्कितगमागमाननुभवस्व भोगानिह ॥ २० ॥**

हे चित्त किं वृथा व्यर्थं परितः भ्रमसि क्वचन यत्र कुत्रापि विश्राम्यतां । तत्र हेतुः स्वयमित्यादि । स्वयं प्रकृतितः यद्यथा भवति तत्तथैव भवति न तु अन्यथा कदापि भवति । अतीतमपि न स्मरन्नपि च भावि असंकल्पयन् । अतर्किताः गमागमाः येषां तान् अनिश्चितोत्पत्तिविलयानिति यावत् । भोगान् इह संसारे अनुभवस्व । हे चेतः यदृच्छालाभसंतुष्टं भवेत्यर्थः ।

**पाणिं पात्रयतां निसर्गशुचिना भैक्षेण संतुष्यतां**
**यत्र क्वापि निषीदतां बहुतृणं विश्वं मुहुः पश्यताम् ।**
**अत्यागेपि तनोरखण्डपरमानन्दावबोधस्पृहां**
**मर्त्यः कोपि शिवप्रसादसुलभां संपत्स्यते योगिनाम् ॥२१॥**

पाणिं पात्रयतां पात्रवदुपयुञ्जानानां निसर्गतः स्वभावतः शुचि तेन भैक्षं भिक्ष्यत इति तेन भिक्षाकदम्बकेन । ईषदसमाप्तं तृणं बहुतृणम् । तृणव-

---

did not harrass our enemies; * * * *
we did not sip the noisy water of the streamlets of the Himâlayâs: we passed our time like crows desirous of obtaining a morsel from others.

20. Why do you wander for nothing, oh mind ? Rest yourself somewhere. A thing that naturally ( lit. of itself ) takes a particular course does take it; it changes not, Without, therefore, remembering what is past, or speculating about what is to come, do you in this world experience fruits, the coming and going of which cannot be determined beforehand.

---

२० अतर्कितसमागमान्, अनुभवामि भोगानहम् ।

दिति यावत्। योगिनाम्। तनोः शरीरस्य अत्यागे विद्यमानत्वेऽपि कोऽपि मर्त्यः कश्चिदेव अनेकशतसहस्रेषु शिवस्य प्रसादः तेन सुलभां अखण्डः यः परमानन्दस्य अवबोधः प्रतिपत्तिः तस्यै स्पृहां संपत्स्यते। आश्चर्यवदेव कश्चिद्धीरो यो योगिगम्यां स्पृहां लभत इत्यर्थः।

प्रशान्तशास्त्रार्थविचारचापलं
निवृत्तनानारसकाव्यकौतुकम्।
निरस्तनिःशेषविकल्पविस्तरं
प्रपत्तुमन्विच्छति शंकरं मनः ॥ २२ ॥

प्रशान्तं शास्त्रार्थस्य विचारे चापलं यस्य तत्। निवृत्तं नानारसा यस्मिन् तादृशे काव्ये कौतुकं यस्य तत्। निरस्तः निःशेषं यथा स्यात्तथा विकल्पानां विस्तरः यस्य तत्। मनः शंकरं प्रपत्तुं प्रकर्षेण आप्तुं अन्विच्छति अनुबन्धेन वाञ्छति।

---

21. Some mortal can, even without casting off the body, acquire a desire for the knowledge of uninterrupted and supreme delight, which is easily to be had through the grace of S'iva, and which is possessed by Yogins who use the hand as a pot, who are contented with alms which are intrinsically pure, who sit any where, and who ever look upon the world as almost like grass.

22. My mind desires to go to S'ankara, its scruples in the investigation of Scriptural meaning being completely

---

२१ श्लोकात्परमिदं पद्यमुपलभ्यते—

पातालान्न विमोचितो बत बली नीतो न मृत्युः क्षयं
नो मृष्टं शशिलाञ्छनं च मलिनं नोन्मूलिता व्याधयः।
शेषस्यापि धरां विधृत्य न कृतो भारावतारः क्षणं
चेतः सत्पुरुषाभिमानमनिशं मिथ्या वहत्खिद्यसे ॥

By you Bali was not liberated from the nether world; death was not done away with; the dark spot on the moon was not wiped away, nor were diseases rooted out; nor was S'esha's burden lightened (by you) for a moment by supporting the earth. Oh heart you suffer torment day and night by the false pride of being good.

फलं स्वेच्छालभ्यं प्रतिवनमखेदं क्षितिरुहां
पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम् ।
मृदुस्पर्शा शय्या सुललितलतापल्लवमयी
सहन्ते संतापं तदपि धनिनां द्वारि कृपणाः ॥ २३ ॥

स्वेच्छया लभ्यम् । वनं वनं प्रति । क्षितिरुहां वृक्षाणाम् । शिशिरं मधुरम् । पुण्याश्च ताः सरितः तासाम् । मृदु स्पर्शो यस्याः सा तथा शय्या । सुललिताः लतानां पल्लवाः तेषां विकारः तत्प्रचुरा वा तन्मयी । तदपि एवं सत्यपि धनिनां श्रीमतां द्वारि कृपणाः पुरुषाः संतापं सहन्ते । आश्चर्यमेतत् ।

भव्यं भक्तं ततः किं कदशनमथवा वासरान्ते ततः किं
कौपीनं वा ततः किं किमथ सितमहच्चाम्बरं वा ततः किम् ।
एका भार्या ततः किं शतगुणगुणिता कोटिरेका ततः किं
त्वेको भ्रान्तस्ततः किं करितुरगशतैर्वेष्टितो वा ततः किम् ।२४।।

भव्यं सुंदरं भक्तं ओदनः । कदशनं कुत्सितमन्नम् । वासरान्ते दिनान्ते । सितं महच्चाम्बरं शुभ्रमहावस्त्रम् । शतगुणैर्गुणिता एका कोटिः अपरिमिता इति यावत् । करिणां तुरगाणां च शतैः वेष्टितः । सर्वस्य नश्वरस्वभावत्वान्न किंचिदपि परमार्थसाधकमिति तात्पर्यम् ।

---

set at rest, its delight in poetry full of various sentiments being turned away, and all its wild doubts ( lit. expanse of doubts ) being totally dispelled.

23. There are the fruits of trees obtainable at will in every forest without difficulty ; at intervals there is the cool and sweet water of sacred rivers, a bed made of the tender leaves of creepers is soft to the touch ; ( although these are available ) mean persons do yet suffer pain at the gates of the rich.

24. What if ( you have ) excellent rice, or a coarse meal at the close of the day ? What if ( you have ) a strip of cloth, or a long white piece of it ? What if ( you have ) one wife, or a number of them endowed with hundred qualities ? And what if you wander all alone, or are surrounded by hundreds of elephants and horses ?

---

२४ भक्तं=भुक्तम्, कदशितम्.

भिक्षा कामदुघा धेनुः कन्था शीतनिवारिणी ।
अचला तु शिवे भक्तिर्विभवैः किं प्रयोजनम् ॥ २५ ॥

भिक्षा कामान् दोग्धीति धेनुः । शीतनिवारिणी शीतनिवारणशीला कन्था 'गोधडी' इति ख्याता । अचला दृढा अनन्या वा भक्तिस्तु शंकरे । एवं स्याचेत् विभवैः किं प्रयोजनम् । न किंचिदपीत्यर्थः ।

भिक्षाहारमदैन्यमप्रतिसुखं भीतिच्छिदं सर्वदा
दुर्मात्सर्यमदाभिमानमथनं दुःखौघविध्वंसनम् ।
सर्वत्रान्वहमप्रयत्नसुलभं साधुप्रियं पावनं
शम्भोः सत्रमवार्यमक्षयनिधिं शंसन्ति योगीश्वराः ॥ २६ ॥

भिक्षाया आहारः यस्मिन् तत् । अदैन्यं दैन्यवर्जितम् । अविद्यमानं प्रतिसुखं यस्मिन् । सर्वदा भीतिच्छिदं दुष्टाः ये मात्सर्यादयस्तेषां मथनं नाशनं दुखौघस्य विध्वंसनं सर्वत्र अन्वहं प्रतिदिनं अप्रयत्नेन सुलभं प्राप्यं साधूनां प्रियं पावनं पवित्रं शम्भोः सत्रं पूजनं योगिनामीश्वराः अक्षयो नित्यो निधिः तं शंसन्ति कथयन्ति ।

---

25. Charity is a cow that yields all desires; a wallet protects from cold; (my) devotion to S'iva is firm; what then is the use of riches?

26. The great ascetics say that the worship of S'iva is a treasure of inexhaustible happiness which cannot be refused to any one—worship in which there is (*i. e.* which enjoins) maintenance on charity, in which there is no degradation, which yields unparalleled happiness which always removes fear, does away with the haughty pride resulting from wicked jealousy, and counteracts the down pour of miseries, which is easily accessible every day at all places, is preferred by the good, and is holy.

---

२६ अप्रतिसुखम्-अप्रतिहतं. छिदं-छदम्.

भूः पर्यङ्को निजभुजलता कन्दुकं खं वितानं
दीपश्चन्द्रो विरतिवनितालब्धसङ्गप्रमोदः ।
दिक्कान्ताभिः पवनचमरैर्वीज्यमानः समन्ता-
द्भिक्षुः शेते नृप इव भुवि त्यक्तसर्वस्पृहोऽपि ॥ २७ ॥

निजभुजलता कन्दुकं । 'गिरदी गालउशी' इति प्राकृते ख्यातम् । विरतिः एव वनिता तस्याः लब्धः संगप्रमोदः येन । दिश एव कान्ताः ताभिः पवन-रूपचमरैः समन्तात् सर्वतः वीज्यमानः । त्यक्ताः सर्वाः स्पृहाः येन सोऽपि भिक्षुः संन्यासी नृप इव भुवि शेते ।

भोगास्तुङ्गतरङ्गभङ्गचपलाः प्राणाः क्षणध्वंसिन-
स्तोकान्येव दिनानि यौवनसुखं प्रीतिः प्रियेष्वस्थिरा ।
तत्संसारमसारमेव निखिलं बुद्ध्वा बुधा बोधका
लोकानुग्रहपेशलेन मनसा यत्नः समाधीयताम् ॥ २८ ॥

भोगाः तुङ्गतरंगाणां भङ्गवच्चपलाः चञ्चलाः । क्षणध्वंसिनः क्षणिका इति यावत् । स्तोकानि अल्पानि एव दिनानि कतिपयदिनपर्यन्तस्थायि यौवन-सुखम् । प्रियेषु जनेषु प्रीतिरस्थिरा । निखिलं संसारं असारमेव अनित्यमेव । इति बुद्ध्वा हे बुधा बोधका उपदेशकाः लोकानुग्रहे पेशलं चारु दक्षं वा तेन मनसा यत्नः समाधीयतां क्रियताम् । सर्वमनित्यमिति परिचिन्त्य सर्वेषामपि सुज्ञानां लोकोपकारकरणमेव उचितमिति तात्पर्यम् ।

---

27. An ascetic, though he has abandoned all desires, lies down on the ground like a king, having the earth for his couch, his creeper-like arm for a pillow, the sky for a canopy and the moon for his lamp, experiencing pleasure in his union with the woman called Renunciation, and fanned on all sides by the attendant maids—the quarters, with their chauries—the winds.

28. Pleasures are transient like the high wave, life is liable to pass away in a moment, youthful happiness lasts for a few days only, love for the cherished is fickle; knowing

---

२७. दिक्कान्ता०—दिक्कन्याभिः ; समन्तात्—अनुवेलम्

२८, भङ्ग-भोग-तुल्य; चञ्चलाः,—तरलाः. प्रीतिः०—स्फूर्तिः क्रियासु स्थिरा. बुध्वा—मत्वा; बोधका—यौवने.

यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटुं मृषा
नैषां गर्वगिरः शृणोषि न पुनः प्रत्याशया धावसि ।
काले बालतृणानि खादसि सुखं निद्रासि निद्रागमे
तन्मे ब्रूहि कुरङ्ग कुत्र भवता किं नाम तप्तं तपः ॥ २९ ॥

हे कुरङ्ग यद्धनिनां वक्त्रं मुहुः वारंवारं नेक्षसे न पश्यसि । मृषा चाटुं मिथ्या स्तुतिभाषणं च न ब्रूषे । एषां पूर्वोक्तानां गर्वप्रचुरा गिरः भाषणानि च न शृणोषि पुनः परं च प्रत्याशया उत्कटेच्छया तान्प्रति न धावसि काले क्षुत्काले बालतृणानि खादसि निद्रागमे निद्राप्राप्तौ च सुखं निद्रासि तत्तस्मान्मे मां ब्रूहि भवता कुत्र पुण्यस्थले किं नाम वा तपः तप्तम् । यतः त्वत्सदृशचरितं बुद्धिमति पुरुषेऽपि न दृश्यते अतः कस्य तपस एषा परिणतिः न जाने इति भावः ॥

यां चिन्तयामि सततं मयि सा न रक्ता
सा चान्यमिच्छति जनं स जनोन्यसक्तः ।
अस्मत्कृतेपि परिशुष्यति काचिदन्या
धिक्तां च तं च मदनं च इमां च मां च ॥ ३० ॥

व्याख्यातपूर्वमेतत्पद्यम् । नी श. २.

---

therefore that the entire worldly existence is destitute of any good, ye wise teachers, make the attempt with a mind skilful in doing good to the people.

29. Tell me, oh deer, where did you perform penance and of what name, that (by virtue of it) you have never to see the face of the rich or to tell lying flatteries, you do not hear their haughty words, or run to them with some expectation, but you eat tender grass when it is time (to eat) and lie down at ease when sleep comes (to your eyes).

30. Same as Nītis'ataka sl. 2.

---

३१ यदेव-तदेव, तदा पुमांसम्; शकलं-शतकम्.

वर्णं सितं शिरसि वीक्ष्य शिरोरुहाणां
स्थानं जरापरिभवस्य यदेव पुंसाम् ।
आरोपितास्थिशकलं परिहृत्य यान्ति
चाण्डालकूपमिव दूरतरं तरुण्यः ॥ ३१ ॥

यदेवं पुंसां पुरुषाणां जरया कृतः परिभवः तस्य स्थानं तं शिरसि शिरोरुहाणां केशानां सितं शुभ्रं वर्णं वीक्ष्य दृष्ट्वा तरुण्यः स्त्रियः आरोपितं अस्थिशकलं यत्र तं चाण्डालकूपमिव तान् वृद्धान् परिहृत्य त्यक्त्वा दूरतरं अधिकदूरं यान्ति ।

समारम्भा भग्नाः कति न कतिवारांस्तव पशो
पिपासोस्तुच्छेस्मिन्द्रविणमृगतृष्णार्णवजले ।
तथापि प्रत्याशा विरमति न तेद्यापि शतधा
न दीर्णं यच्चेतो नियतमशनिग्रावघटितम् ॥ ३२ ॥

हे पुच्छविषाणरहित पशो अस्मिन् तुच्छे द्रविणमेव मृगतृष्णासमुद्रः तस्य जले पिपासोस्तव कतिवारान् कति समारम्भाः कर्मप्रारम्भाः न भग्नाः । अपि तु अनेकशः अनेकप्रारम्भाः भग्ना इत्यर्थः । तथापि प्रत्याशा तव उत्कटतृष्णा नाद्यापि विरमति शाम्यति । एवमपि यतः चेतः न शतधा दीर्णं अनेकशः विदीर्णं अतः तन्नियतं निश्चयेन अशनेर्यो ग्रावा तेन घटितं कृतम् । अतो नमस्तुभ्यं एवंविधनिर्लज्जमनुष्याय ।

---

31. Seeing the white colour of the hair on the head, which is the place where men are defeated by old age, young ladies go away leaving them at a distance, as they do, leaving a well used by low-castes over which a piece of bone is suspended.

32. Oh brute, how many times and what preparations of yours, desirous of drinking of the water of the ocean of mirage in the form of wealth, have not been baffled? (Very often they have). Yet your hope is not dispelled; your heart must certainly be formed of adamantine stone since it has not yet been broken into a hundred pieces.

Captivate

संमोहयन्ति मदयन्ति विडम्बयन्ति ।
निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ।
एताः प्रविश्य सदयं हृदयं नराणां
किं नाम वामनयना न समाचरन्ति ॥ ३३ ॥

संमोहयन्ति विवेकरहितं कुर्वन्ति मदयन्ति उन्मादयन्ति विडम्बयन्ति उपहास्यतां नयन्ति । नितरां भर्त्सयन्ति । रमयन्ति विषादयन्ति विषादं प्रापयन्ति एवं एता वामनयनाः स्त्रियः नराणां पुरुषाणां सदयं हृदयं प्रविश्य किं नाम न समाचरन्ति सर्वमपि समाचरन्तीत्यर्थः ।

सिंहो बली द्विरदशूकरमांसभोजी
संवत्सरेण रतिमेति किलैकवारम् ।
पारावतः खरशिलाकणमात्रभोजी
कामी भवत्यनुदिनं वद कोत्र हेतुः ॥ ३४ ॥

द्विरदः करी शूकरो वराहः तयोः मांसभोजनशीलो बली सिंहः किल संवत्सरेण एकवारं एकदिनमेव रतिमेति । रतिसुखाभिलाषी भवतीत्यर्थः । खराः कठिणाः ये शिलाकणाः तन्मात्रभोजी पारावतः कपोतः अनुदिनं प्रत्यहं कामी भवति । कोऽत्र हेतुः कारणं वद कथय । क्षुद्रत्वमहत्त्वे एव अत्र कारणमित्यर्थः ।

स्थितिः पुण्येरण्ये सह परिचयो हन्त हरिणैः
फलैर्मेध्या वृत्तिः प्रतिनदि च तल्पानि दृषदः ।
इतीयं सामग्री भवति हरभक्ति स्पृहयतां
वनं वा गेहं वा सदृशमुपशान्त्यैकमनसाम् ॥ ३५ ॥

पुण्यं च तदरण्यं तस्मिन् स्थितिः वसतिः । हन्तेति हर्षे । हरिणैः सह परि-

---

33. What is it that lovely eyed (women) do not do? Having entered the affectionate heart of men women fascinate them, madden them, mock them, despise them, gladden them and grieve them.

34. A lion, strong, and living on the flesh of elephants and hogs ruts it is said once in a year. The dove eating only hard pebbles ruts daily. Say what the reason here is.

35. Residence in a sacred forest, and oh joy, association

---

३५ °शान्त्यैक-शान्तैक.

षयो मैत्री । फलैः मेध्या पवित्रा वृत्तिः जीविका । प्रतिनदि च दृषदः शिला एव तल्पानि शयनानि । इतीयं एवंविधा हरिभक्तिं स्पृहयतां काङ्क्षतां सामग्री साहित्यं भवति यतः उपशान्तावेवैकस्यां मनः येषां तेषां वनं वा गेहं वा सदृशं भवति । न तेषां गृहे कश्चिदभिनिवेशो न वा वने तिरस्कारो वर्तते सर्वसाम्यावस्थापन्नत्वादित्यर्थः ।

**स्वादिष्ठं मधुनो घृताच्च रसवद्यत्प्रस्रवत्यक्षरं**
**दैवी वागमृतात्मनो रसवतस्तेनैव तृप्ता वयम् ।**
**कुक्षौ यावदिमे भवन्ति धृतये भिक्षाहृताः सक्तव-**
**स्तावद्दास्यकृतार्जनैर्न हि धनैर्वृत्तिं समीहामहे ॥ ३६ ॥**

दैवी वाग् श्रुतिमाता यत् अमृतात्मनः अमृतरूपात् रसवतश्च आत्मनः मधुनः स्वादिष्ठं घृताच्च रसवत् अक्षरं प्रस्रवति तेनैव वयं तृप्ताः । परं च यावत् धृतये शरीरधृत्यर्थं इमे भिक्षया आहृताः सक्तवः कुक्षौ भवन्ति तावत् दास्यकृतार्जनैर्धनैः न हि नैव वृत्तिं जीविकां समीहामहे इच्छामः ।

**उन्मीलत्त्रिवलीतरंगवलया प्रोत्तुंगपीनस्तन-**
**द्वंद्वेनोद्यतचक्रवाकमिथुना वक्त्राम्बुजोद्भासिनी ।**
**कान्ताकारधरा नदीयमभितः क्रूराशया नेष्यते**
**संसारार्णवमज्जनं यदि ततो दूरेण संत्यज्यताम् ॥ ३७ ॥**

उन्मीलन्ती या त्रिवली वलित्रयं सैव तरङ्गवलयं यस्याः सा तथा । प्रक-

---

with the deer, sacred maintenance on fruits, stones for couches on the bank of every river—such are the materials for those that like devotion to God. To those whose minds are fixed on renunciation alone, whether ( they live in ) a house or a forest, it is all the same.

36. We are quite content with those delicious syllables ( utterances ) sweeter than honey or clarified butter which the Divine speech (the Upanishads) sends forth from its ambrocial and immortal body; as long as there are under our arm a quantity of barley-meal procured by begging for our maintenance so long do we not wish to live on wealth acquired by servitude.

---

३६ दैवी–देवी. इमे–अमी; ०र्जनैर्न वसुभिः; वृत्तिं–भोगान्.

